**शकुन्तला—** ण केअलं तादणिओओत्ति । अत्थि मम वि सोदरसिणेहो एदेसु । [इति वृक्षसेचनं रूपयति ।

न केवलं तातनियोग इति । अस्ति ममापि सोदरस्नेह एतेषु ।

**राजा—** कथमियं सा कण्वदुहिता । असाधुदर्शी खलु तत्रभवान्काश्यपः, य इमामाश्रमधर्मे नियुङ्क्ते ।

---

**नियोग इतीति** । इतिर्हेतौ । किं तर्हि क्लिश्यसे इत्यत्राह— ममापि सोदरस्नेह एतेषु; सोदरस्नेहः तत्सदृशस्नेहः । सखीवचनेन कण्वदुहिता शकुन्तलेयमिति जानन्नाह— **कथमिति** । सा, या वैखानसमुखाच्छ्रुता । अथ विस्मयावेगेन तां दृश्यबुद्ध्यावलोकयन्, तद्रूपामृतपानप्रीयमाणचक्षुरिन्द्रियद्वारा तदासक्तचित्तः, कामकलापरिशीलनसमुचिते काले तां धर्मकलां परिशीलयन्तीमालोक्य, तत्प्रयोजकस्य मुनेरविमृश्यकारितामाह— असाध्विति । कामकलापरिशीलनमुक्तं राजशेखरेण— 'उत्तालालकभञ्जनानि कबरीपाशेषु शिक्षारसो दन्तानां परिकर्म नीविनहनं भ्रूलास्ययोग्याग्रहः । तिर्यग्लोचनवल्गितानि वचसां छेकोक्तिसंक्रान्तयः स्त्रीणां म्लायति शैशवे प्रतिकलं कोऽप्येत्र केलिक्रमः' इति । साधु सम्यक् द्रष्टुं विचारयितुं शीलमस्येति साधुदर्शी, न साधुदर्शी असाधुदर्शी, अविमृश्यकारीत्यर्थः । खलुरवधारणे । तत्रभवानिति पूज्यवाची । काश्यप इति कण्वस्य गोत्रनाम । तत्रभवान् काश्यप इति अभिजनादयो गुणा

इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥ १६ ॥

भवतु; पादपान्तर्हित एव विस्रब्धं तावदेनां पश्यामि ।

[इति तथा करोति ।

**शकुन्तला—** अणसूए, आअदपिणद्धेण थणवक्कलेण पिअंवदाए णिअन्तिदम्हि । सिढिलेहि दाव णं ।

---

अस्मिन्ननुपयोगिन आसन्निति भावः । उक्तमर्थमुपपादयति— **य इमामिति** । इमां लोकातिक्रान्तरामणीयकाम् । आश्रमधर्मे तपस्विजनोचिते धर्माचरणे नियुङ्क्ते, न तु कदाचित् न्ययुङ्क्तेति ॥

एवं मुनेर्योग्यायोग्यविचाराभावमुक्त्वा शक्याशक्यविचाराभावमाह— **इदमिति** । इदं नवमालिकाकुसुमपेशलम् । किलेति वाक्यालंकारे । अव्याजमनोहरं निसर्गरमणीयम् । तपःक्षमं तपसि तपश्चरणे क्षमं शक्तम् । नीलोत्पलपत्रधारया समिल्लताच्छेदनव्यवसाय इव एतद्वपुषः तपःक्षमत्वसाधनेच्छा इत्यर्थः । निदर्शनेयम् ॥

अभिनवयौवनप्रयुक्तया स्तनमुकुलयोः प्रतिक्षणप्रवृद्धया तन्निबद्धस्य वल्कलस्य सातिशयेन संश्लेषेण अवशाङ्गलतिका तत्त्वतोऽसंविदाना आह— **अणसूए इत्यादि** । आयतम् दृढम्; यथा—

अनसूये, आयतपिनद्धेन स्तनवल्कलेन प्रियंवदया नियन्त्रितास्मि । शिथिलय तावदेनम् ।

**अनसूया—** तह । तथा । [इति शिथिलयति ।

**प्रियंवदा—** (सहासम्) एत्थ दाव पओहरवित्थारइत्तअं अत्तणो जोव्वणं उवालह ।

अत्र तावत्पयोधरविस्तारयितृकम् आत्मनो यौवनमुपालभस्व ।

**राजा—** काममननुरूपमस्या वयसो वल्कलम्, न पुनरलंकारश्रियं न पुष्यति । कुतः ?

---

'स च वधमत्यायततः स्नेहात्तेष्ववदत्दैकमत्याय ततः' इति । आयतं यथा भवति तथा पिनद्धेन । 'वल्कं वल्कलमस्त्रियाम्' इत्यमरः । नियन्त्रिता निरुद्धप्रसरा । तया अनवगम्यमानां स्तनाभिवृद्धिमुक्तिभङ्ग्या बोधयति—**अत्रेत्यादि** । तादृशं यौवनमुपालभस्व, न मामिति भावः । अत्र वल्कलबन्धदार्ढ्यें । अनेन आलम्बनविभावपरिपोषविधायिषु मूर्धाभिषिक्तो यौवनारम्भ उक्तः । एवं पादपान्तर्हितस्तां स्वैरमालोकयन्, तस्या अभिनवयौवनप्रतिक्षणप्रवर्धमानयोः कुचकुड्मलयोरननुरूपं वल्कलमालोक्य तस्यालंकारत्वं साधयन्, तदाकृतेर्लोकोत्तरतां प्रतिपादयति— **काममिति** । काममित्यकामानुमतौ । 'अकामानुमतौ कामम्' इत्यमरः । वल्कलमस्या वयसोऽननुरूपं काममित्यन्वयः । वयसः औचित्यात् यौवनस्य अलंकारार्हस्य । अन-

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥१७॥

---

नुरूपम् अनलंकारत्वात् । अकामानुमतौ हेतुमाह— **न पुनरिति** । पुनःशब्दो विशेषद्योतकः । विशेषमाह–– अलंकाराश्रियं न पुष्यतीति नेति । अलंकारेण या श्रीः सा अलंकारश्रीः तां पुष्यति करोति ; यथानर्घराघवे–– 'नयनयोरनायुष्यं पुष्यत्यवतमसमुच्चैर्जलमुचाम्' इति । संभाव्यनिषेधनिवर्तने द्वौ नञौ । कुत इति उक्तवक्ष्यमाणयोर्ज्ञाप्यज्ञापकभावद्योतकः ॥

उक्तमर्थमुपपादयति— **इयमधिकमनोज्ञा वल्कलेनापि तन्वीति** । वल्कलान्वये पूर्वस्मादधिकं दर्शनीया ; स एव ह्यलंकाराणां धर्मः— यत्स्वत उत्कृष्टस्य स्वान्वये उत्कर्षातिशयाधानम् । वल्कलेनापि, अपिरननुरूपत्वानुस्मारकः । सरसिजमित्यादिवाक्यार्थद्वयमस्योपपादकमेव । अनुविद्धं संपृक्तम् । मलिनम् असितम् । लक्ष्म कलङ्कः । लक्ष्मापि लक्ष्मीं तनोति, हिमांशुर्लक्ष्मणापि दर्शनीय इत्यर्थः । उभयत्र प्रतिवस्तूपमा । 'प्रतिवस्तूपमा तु सा । सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः' इति । एषा चोपमापर्यवसायिनी ; अतो यथा सरसिजं शैवलेन, यथा हिमांशुर्लक्ष्मणा, तथेयं तन्वी वल्कलेनाधिकमनोज्ञा । अतो वल्कलमस्य अलंकारश्रियं पुष्यत्येवेत्यर्थः । अत्र सरसिजसाम्येन कुचयोः सं-

**शकुन्तला—** (अग्रतोऽवलोक्य) एसो वादेरिदपल्लवंगुलीहिं तुवरेदि विअ मं केसररुक्खओ। जाव णं संभावेमि।

एष वातेरितपल्लवाङ्गुलीभिस्त्वरयतीव मां केसरवृक्षकः। यावदेनं संभावयामि।

[इति परिक्रामति।

**प्रियंवदा—** हला सउन्दले, एत्थ एव्व दाव मुहुत्तअं चिट्ठ। जाव तुए उवणदाए लदासणाहो विअ केसररुक्खओ पडिभादि।

---

स्थानसौष्ठवम्, हिमांशुसाम्येन कुचमण्डलस्य बहुललावण्यपरिपूर्णत्वं च व्यज्यते। एवं वल्कलस्यालंकारकार्यकरत्वमुपपाद्य, कार्यकरत्वेनाक्षिप्तं तस्य तदाकृतिसंबन्धिनमलंकारभावं विशेषरूपं सामान्येनोपपादयति— **किमिव हीति**। मधुराणां सकललोकचक्षुरिन्द्रियाह्लादकारिणीनाम् आकृतीनां सर्वं मण्डनमेवेत्यर्थः। अत्र प्रतिवस्तूपमार्थान्तरन्यासयोः संसर्गात् संसृष्टिरलंकारः॥

**एष इति।** अत्र पल्लवेष्वङ्गुलीत्वमारोप्यते; अतः केसरवृक्षेऽर्भकत्वमर्थादायाति। त्वरयतीत्यनेन त्वराकारणमाह्वानं लक्ष्यते। केसरः बकुलः। एष केसरवृक्ष एवार्भको वातान्दोलितपल्लवाङ्गुलिसंज्ञया मामाह्वयतीवेत्यर्थः। परिक्रामति, परिक्रमणमत्र केसरान्तिकगमनम्। तदन्तिकगतां तामाह— **हला इत्यादि**। सखि शकुन्तले अत्रैव मुहूर्तं तिष्ठ। कुत इत्याह— **यावदित्यादि**। रुक्खओ

हला शकुन्तले, अत्रैव तावन्मुहूर्तं तिष्ठ; यावत्त्वयोपनतया लतासनाथ इव केसरवृक्षः प्रतिभाति ।

**शकुन्तला**— अदो क्खु सि पिअंवदा ।

अतः खल्वसि प्रियंवदा ।

**राजा**— न पुनः प्रियंवदा; प्रियमपि तथ्यमाह । अस्याः खलु,

**अधरः किसलयरागः**
**कोमलविटपानुकारिणौ बाहू ।**
**कुसुममिव लोभनीयं**
**यौवनमङ्गेषु संनद्धम् ॥ १८ ॥**

---

इति प्राकृते स्वार्थे कः । सनाथः सहितः । यावदिति यस्मादर्थे । लतासाम्येन सौन्दर्यातिशयो व्यज्यते । प्रत्यक्षस्तुतिमसहमाना आह— **अतः खल्वसि प्रियंवदा इति** । अतः एवंप्रियभाषणात् प्रियंवदा प्रियंवदानामधेया ॥

सख्या उक्तं लतासाम्यमनुभूयाह—**न पुनरिति** । सत्यत्वमुपपादयति— **अस्या इति** । अङ्गेषु संनद्धं संजातम् । यौवनं कुसुममिवेत्यन्वयः । अङ्गेष्विति बहुवचनेन यौवनकार्यस्य माधुर्यसौकुमार्यादेः सर्वाङ्गीणता व्यज्यते; यदुक्तं राजशेखरेण— 'विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा' इति । संनद्धपदेन सकललोकहृदयोन्माथकत्वं व्यज्यते ॥

**अनसूया**— हला सउन्दले, इअं सअंवरवहू बालसहआरस्स तुए किदणामहेआ वणजोसिणत्ति णोमालिआ। णं विसुमरिदा सि।

हला शकुन्तले, इयं स्वयंवरवधूर्बालसहकारस्य त्वया कृतनामधेया वनज्योत्स्नेति नवमालिका। एनां विस्मृतासि।

**शकुन्तला**— जइ, अत्ताणं विसुमरिस्सं। (लतामुपेत्यावलोक्य च) हला, रमणीओ इमस्स लदापाअवमिहुणस्स वइअरो संवुत्तो। जं णवकुसुमजोव्वणा वणजोसिणा, बद्धफलदाए उवभोअक्खमो एसो बालसहआरो।

[इति पश्यन्ती तिष्ठति।

---

अन्तिकस्थं सहकारं स्वयमेवोपपन्नं कुर्वतीं नवमालिकामुद्दिश्याह—**हला इत्यादिना**। एनां विस्मृतासि, अत्र काक्का प्रश्नः—किं विस्मृतवतीति। सहकारे वरत्वमर्थादायाति ; सहकारवरस्येत्यर्थः। यद्यात्मानं विस्मरिष्यामि— यद्येनां विस्मृतास्मि, तर्ह्यात्मानं विस्मरिष्यामीत्यर्थः। एतद्विस्मरणमात्मविस्मरणमिव न शङ्कनीयमिति भावः। नवमालिकासहकारयोः सख्यारोपितं वधूवरत्वमनुसृत्याह—**हला इत्यादि**। व्यतिकरः संश्लेषः। रमणीयत्वमुपपादयति— नवकुसुमयौवना वनज्योत्स्ना बद्धफलतयोपभोगक्षमः सहकारः। नवं कुसुमानां यौवनं विकासो यस्याः, नवं कुसुमं रजो यस्य तत् नव-

यदि, आत्मानं विस्मरिष्यामि । हला ! रमणीयोऽमुष्य लतापादपमिथुनस्य व्यतिकरः संवृत्तः । यन्नवकुसुमयौवना वनज्योत्स्ना, बद्धफलतयोपभोगक्षम एष बालसहकारः ।

**प्रियंवदा—** अणसूए, जाणासि ?—किं सउन्दला वणजोसिणं अदिमेत्तं पेक्खदित्ति ।

अनसूये, जानासि ?— किं शकुन्तला वनज्योत्स्नामतिमात्रं पश्यतीति ।

**अनसूया—** ण क्खु विभावेमि । कहेहि ।

न खलु विभावयामि । कथय ।

**प्रियंवदा—** जह वणजोसिणा अत्तणो सरिसेण्व पाअवेण संगदा, अवि णाम एव्वं अहं वि अत्तणो अणुरूवं वरं लहेअत्ति ।

---

कुसुमं तादृशं यौवनं यस्या इति च, नवकुसुमयौवना । बद्धं फलं कुसुमपरिणामो दक्षता च यस्य सः बद्धफलः । वात्सल्येन वनज्योत्स्नां सावधानमालोकयन्तीं शकुन्तलामुद्दिश्य सपरिहासमाह— **अनसूये जानासीति** । अत्र काका प्रश्नः । विभावयामि जानामि । लभेयेति, मत्वेति शेषः । लज्जया वरप्रसङ्गमसहमाना आह— एष

यथा वनज्योत्स्ना आत्मनः सदृशेनैव पादपेन संगता,
अपि नामैवमहमप्यात्मनोऽनुरूपं वरं लभेयेति ।

**शकुन्तला**— एसो णूणं तुह अन्तग्गदो मणोरहो ।

[इति कलशमावर्जयति ।

एष नूनं तवान्तर्गतो मनोरथः ।

**राजा**— अपि नाम कुलपतेरियमसवर्णक्षेत्रसंभवा स्यात् ?

---

नूनं तवान्तर्गतो मनोरथः, न ममेति भावः । आवर्जयति सेकार्थमधोमुखं करोति ॥

अथ क्रमेण तां प्रत्यङ्कुरिताभिलाषस्तस्या गम्यागम्यविचारे मुनिकन्यकाया अपि पाक्षिकं गम्यत्वमस्तीत्यवधार्य, गम्येति पक्षस्य संभावनां प्रार्थयते— **अपि नामेति** । स्यादिति संभावनाप्रार्थनयोर्लिङ् । अपि नामेति तद्द्योतकः । भूतप्राणता चात्र लिङः, प्रार्थ्यमानस्यातीतत्वात् । सवर्णादन्यत् असवर्णं तादृशं क्षेत्रं कलत्रम् असवर्णक्षेत्रं तस्मिन् संभवो जन्म यस्याः । 'क्षेत्रं केदारदारयोः' इत्यमरः । ब्राह्मणस्य चतुर्षु वर्णेषु विवाहस्य विहितत्वान्मुनेरसवर्णक्षेत्रत्वमपि संभवति । सवर्णक्षेत्रमात्रसंभवत्वस्य व्यपोहः, क्षत्रियस्य क्षत्रियादिषु त्रिषु वर्णेषु विवाहस्य विहितत्वात्; 'शूद्रस्य भार्या शूद्रैव सा च स्वा च विशः स्मृते । ते च स्वा च क्षत्रियस्य ताश्च स्वा चाग्रजन्मनः' इति स्मृतेः । अत्र कारणादप्रस्तुतात् कार्यं प्रस्तुतं प्रतीयते; अपि नामेयं मम गम्या स्यादित्यर्थः ॥

अथवा ।

**असंशयं क्षत्रपरिग्रहक्षमा**
**यदार्यमस्यामभिलाषि मे मनः ।**
**सतां हि संदेहपदेषु वस्तुषु**
**प्रमाणमन्तःकरणप्रवृत्तयः ॥ १९ ॥**

तथापि तत्त्वत एनामुपलप्स्ये ।

---

**अथवेति** । अलं प्रार्थनयेत्यर्थः । कुत इत्याह—**असंशयमिति** । संशयस्याभावोऽसंशयम् । अव्ययीभावः । इयं क्षत्रपरिग्रहक्षमा, असंशयम् । अत्र सामान्याद्विशेषः प्रस्तुतः प्रतीयते । इयं मत्परिग्रहयोग्या, ध्रुवमित्यर्थः । कुत इत्याह—आर्यं मे मनः अस्यामभिलाषि यदिति । आर्यम् अधर्मपराङ्मुखम् । मनोभिलाषस्य प्रामाण्यमाह— **सतामिति** । सतां प्रमाणमित्यन्वयः । सन्तोऽन्तःकरणप्रवृत्तिं प्रमाणत्वेन अङ्गीकुर्वन्तीत्यर्थः, 'वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम्' इति । आर्यमित्यात्मगुणकथनं न दोषः, वास्तवत्वात् 'स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः' इति वचनात् ॥

एवं गम्यत्वे निश्चितेऽपि परितोषमलभमानस्तत्प्रकारं जिज्ञासुराह— **तथापीति** । यद्यप्यात्मतुष्टिलक्षणेन प्रमाणेनेयं गम्येति निश्चयः; तथापि, तत्त्वतः वस्तुवृत्तितः उपलप्स्ये ज्ञास्यामि ।

**शाकुन्तला—** (ससंभ्रमम्) सलिलसेअसंभन्तो णोमालिअं उज्झिअ वअणं मे महुअरो अहिहोदि ।

[इति भ्रमरबाधां रूपयति ।

सलिलसेकसंभ्रान्तो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिभवति ।

**राजा—** (सस्पृहम्)

**चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं**
**रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।**

---

इदानीमवस्थाभेदेन विभावमभिनवीकरोति— **सलिलसेकेत्यादि** । सलिलस्य सेकेन क्षरणेन तदुत्थेन ध्वनिना संभ्रान्तः ॥

अथ मधुकरपीडापर्याकुलतया विशेषदृश्यां तां विलोक्य प्रवृद्धाभिलाषो राजा, नवमालिकां विहाय तद्वदनाभिमुखं ततस्तया कातरतया तरलतारकमवलोकितम् अत एवेन्दीवरधिया तस्या दृष्टिं पुनः पुनः स्पृशन्तं तद्दृष्टेः कर्णान्तविश्रान्तत्वात् तदन्तिकेऽपीन्दीवरधियैव मधुरझंकारमुखरं चरन्तं तथैवाभिनवसौरभलोभेनाधरीकृतकुसुमामोदमधरकिसलयमभिमृशन्तं मधुकरमभिमुखीकृत्य कार्यसमारोपद्वारा तस्मिन् कामुकत्वमारोप्य, तस्य स्वस्माद्व्यतिरेकमाह— **चलापाङ्गमिति** । हे मधुकर, त्वम् अनया चलापाङ्गं चलः लोलतारकः अपाङ्गः यथा भवति तथा दृष्टः दृश्यबुद्ध्यावलोकितः ।

करं व्याधून्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥

---

अनेन अनुरागानुभावभूतं तरलाख्यं वीक्षणमुक्तम् । 'तरलं तदिति प्राहुर्लोलत्तरकनीनिकम्' इति । एवंविशिष्टवीक्षणविदिततदनुरागः सुकृतशतैकलभ्यं कटाक्षवीक्षणसुखमनुभूय, अनुरागिणीं वेपथुमतीमेनाम् बहुशः बहुवारम् स्पृशसि आलिङ्गसि । वेपथुमतीमिति तत्कालविशेषणम् । वेपथुः सात्त्विको विकारः ; 'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरसादोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः' इति । इवशब्दोऽत्रावधारणे । अथालिङ्गनसमयजनितेन सात्त्विकविकारेणास्या अनुरागस्य क्रमोत्कर्षमवधार्य रहस्याख्याय्येव कर्णान्तिकचरो मृदु स्वनसि मन्त्रयसे ; तथैव रहस्यमाख्याय, अस्मदभिलषितानुकूलेयमिति मत्वा, करं व्याधून्वत्या अस्याः रतिसर्वस्वं रतिनिधानभूतम् अधरम् अधरामृतम् पिबसि आस्वादयसि । करं व्याधून्वत्या इति पानसमयविशेषणेन माधुर्यातिशयप्रयुक्ताग्रहातिरेकहेतुकमधरस्य निर्दयग्रहणं व्यज्यते ; तेन रससर्वस्वादानं च ; रतिसर्वस्वमित्यनेन कर्तव्यावशेषाभावश्च । खलुरेवार्थे ; यत एवम्, अतस्त्वमेव कृती । एवमनेकजन्मार्जितसुकृतशतैकलभ्यानामस्माभिश्चिराभिलषितानामस्याः कटाक्षवीक्षणगोचरीभावादीनां तवायत्तसिद्धत्वात् त्वमेव कृती कृतकृत्यः । वयम् तत्त्वान्वेषात् गम्यत्वनिश्चिकीर्षया हताः आयासमात्रपात्रीभूताः जाताः । अत्र शुद्धकार्यसमारोपनिबन्धना समासोक्तिर्व्यतिरेकश्च । 'परोक्तिर्भेदकैः श्लिष्टैः समासो-

**शकुन्तला—** हला, परित्ताअह मं इमिणा दुव्विणीदेण महुअरेण अहिहूअमाणं।

हला, परित्रायेथां मामनेन दुर्विनीतेन मधुकरेण अभिभूयमानाम्।

**उभे—** (सस्मितम्) का वअं परित्तादुं। दुस्सन्दं एव्व अक्कन्द। राअरक्खिदाइ तवोवणाइ णाम।

के आवां परित्रातुम्? दुष्यन्तमेवाक्रन्द। राजरक्षितानि तपोवनानि नाम।

**राजा—** अवसरोऽयमात्मानं प्रकाशयितुम्। कः कोऽत्र भोः— (इत्यर्धोक्ते, स्वगतम्) अथवा राजभावस्त्वभिज्ञातो भवेत्। भवतु; एवं तावदभिधास्ये।

---

क्तिः' इति। तत्र समासोक्त्या व्यतिरेक उत्थाप्यते। स पुनरुत्थाप्यमान उत्थापिकायास्तस्याः शोभामावहतीति व्यतिरेकस्योत्थाने अङ्गं समासोक्तिः, समासोक्तेश्चमत्कारकारित्वे अङ्गं व्यतिरेक इति परस्परमङ्गाङ्गिभावात् संकरालंकारोऽयम्॥

के आवां परित्रातुम्, आवां न परित्राणसमर्थे इति भावः। तर्हि किं करवाणीत्यत्राह— **दुष्यन्तमेवेति**। अवसरोऽयमिति। प्राप्तावसरत्वमभयदानार्थत्वेनापदेश्यत्वात्। अथवेति। एवं न वक्तव्यमित्यर्थः। कुत इत्याह— **राजभाव इति**। पदान्तरे स्थानान्तरे।

**शकुन्तला—** एसो दुट्ठो ण विरमदि । ता अण्णदो गमिस्सम् । (पदान्तरे स्थित्वा सदृष्टिक्षेपम्) कहं इदो वि मं अणुसरदि ।

एष दुष्टो न विरमति । तस्मादन्यतो गमिष्यामि । कथमितोऽपि मामनुसरति ।

**राजा—** (सत्वरमुपसृत्य)

**कः पौरवे वसुमतीं**
**शासति शासितरि दुर्विनीतानाम् ।**
**अयमाचरत्यविनयं**
**मुग्धासु तपस्विकन्यासु ॥ २१ ॥**

(सर्वा राजानं दृष्ट्वा किंचिदिव संभ्रान्ताः ।)

**अनसूया—** अज्ज, ण किंचि अच्चाहिदं । इअं णो पिअसही महुअरेण आकुलीकिअमाणा कादरीभूदा ।

[इति शकुन्तलां दर्शयति ।

---

क इति । पौरव इत्यनेन धर्मतः शासनं व्यज्यते । अनादरे सप्तमी । पौरवमनादृत्येत्यर्थः । अविनयं तत्कार्यमकृत्यम् । मुग्धासु अप्रतिपत्तिमूढासु । अनेन सुकरत्वं व्यज्यते । तपस्विकन्यासु अनेनात्याहितत्वं च ॥

आर्य न किंचिदत्याहितम्, महत् भयं नास्तीत्यर्थः । 'अ-

आर्य, न किंचिदत्याहितम् । इयं नः प्रियसखी मधुकरेणाकुलीक्रियमाणा कातरीभूता ।

**राजा**— ( शकुन्तलाभिमुखो भूत्वा ) अपि नाम तपो वर्धते ?

(शकुन्तला साध्वसादवचना तिष्ठति ।)

**अनसूया**— दाणिं अदिहिविसेसलाहेण । हला सउन्दले, गच्छ उडअं । फलमिस्सं अग्घं उवहर । इदं पादोदअं भविस्सदि ।

इदानीमतिथिविशेषलाभेन । हला शकुन्तले, गच्छोटजम् । फलमिश्रमर्घ्यमुपहर । इदं पादोदकं भविष्यति ।

**राजा**— भवतु ; भवतीनां सूनृतयैव गिरा कृतमातिथ्यम् ।

---

त्याहितं महाभीत्यां प्राणानाकाङ्क्षिकर्मणि' इति केशवः । किं तर्हीत्याह— **इयमिति** । नः आवयोः । इयमित्यभिनये । साध्वसात् अतर्कितोपनतमहापुरुषदर्शनजनितात् । मनःसंक्षोभपूर्वोऽङ्गसादः साध्वसः । अवचना अप्रतिवचना । तस्यामवचनायां स्वयं प्रतिवक्ति— इदानीमतिथिविशेषलाभेन, तपो वर्धत इत्यायाति । विशिष्टोऽतिथिरतिथिविशेषः । लाभेनेत्यनेन प्रीत्यतिशयो व्यज्यते । एवं प्रतिपत्तिमूढां ताम् अतिथिसत्काराय त्वरयति— **हला इति** । इदं सेकार्थं संभृतम् । तस्याः क्षणिकमपि विरहमसहमान आह— **भवत्विति** । सूनृतया 'सूनृतं प्रिये' इत्यमरः । आस्तामर्घ्यपाद्यादिः,

**प्रियंवदा—** तेण हि इमस्सिं दाव पच्छाअसीअलाए सत्त-वण्णवेदिआए अज्जो उवविसिअ परिस्समविणोदणं करेदु।

तेन ह्यस्यां तावत्प्रच्छायशीतलायां सप्तपर्णवेदिकाया-मार्य उपविश्य परिश्रमविनोदनं करोतु ।

**राजा—** ननु यूयमप्यनेन कर्मणा परिश्रान्ताः ।

**अनसूया—** हला सउन्दले, उइदं णो पज्जुवासणं अ-दिहीणं । एत्थ उवविसह्म । [इति सर्वे उपविशन्ति ।

हला शकुन्तले, उचितं नः पर्युपासनमतिथीनाम् । अत्रोपविशामः ।

**शकुन्तला—** (स्वगतम्) किं णु क्खु इमं देक्खिअ तवो-वणविरोहिणो विआरस्स गमणीअह्मि संवुत्ता ।

---

भवतीनां मधुरभाषणेनैव सत्कृतोऽस्मीति भावः । अतिथिविशेषो-चितमासनदानादिकमारभते—**तेन हीति**। प्रच्छायेन शीतलायाम् । अनेन प्रलोभनं व्यज्यते ; तेनोपवेशे प्रीतिश्च। ताभिः सह स्वैरासिकां काङ्क्षन्नाह— **नन्विति** । युष्माकमपि परिश्रमविनोदावसरोऽयम्, तद्युष्माभिरप्युपवेष्टव्यमिति भावः । ससाध्वसां तां तत्पूर्वदृष्टेन महा-पुरुषेण सहोपवेशेऽनुकूलयति— **हला इति** । स्वगतम् । 'सर्वेषां नियतस्यैव श्राव्यमश्राव्यमेव च । सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्व-गतं मतम्' इति । अथ दर्शनीयाकृते राज्ञो दर्शनेनाङ्कुरितर-

किं नु खल्विमं दृष्ट्वा तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता ।

**राजा**—( सर्वा विलोक्य ) अहो समवयोरूपरमणीयं भवतीनां सौहार्दम् ।

**प्रियंवदा**—( जनान्तिकम् ) अणसूए, को णु क्खु एसो चउरगम्भीराकिदी महुरं पिअं आलवन्तो पहवन्दो दक्खिण्णं वि करेदि ।

अनसूये, को नु खल्वेष चतुरगम्भीराकृतिर्मधुरं

---

तिभावा कामसुखस्यासंविदाना विमृशति—**किं न्विति**। इमं दृष्ट्वेति हेतुभावगर्भम्; अस्य दर्शनादित्यर्थः। विकारस्य मनसश्चक्षुरिन्द्रियद्वारा रूपलक्षणविषयानुभवौन्मुख्यरूपस्य। विषयपराङ्मुखं हि तपोवनवासिजनमनः; अत आह— **तपोवनविरोधिन इति**। मधुरभाषणेन ता आवर्जयति—**अहो इति**। रूपं वपुः सौन्दर्यं स्वभावश्चेति त्रयोऽर्था विवक्षिताः। 'अथ रूपं नपुंसकम्। स्वभावाकृतिसौन्दर्यवपुःषु श्लोकशब्दयोः' इति केशवः। सौहार्दं सख्यम्। 'त्रिपताकाकरेणान्यानपवार्यान्तरा कथाम्। अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम्' इति जनान्तिकलक्षणम्। तस्यान्यैरश्रवणं नाट्यसमयः। 'आसन्नोक्तं तु यद्वाक्यं न शृण्वन्ति परस्परम्। अनुक्तं श्रूयते यत्तु नाट्यधर्मस्तु स स्मृतः' इति। राज्ञस्तत्त्वं जिज्ञासुर्विचारयति— **अनसूये इति**। चतुरा दर्शनीया गम्भीरा चाकृतिर्यस्य।

प्रियमालपन्प्रभवन् दाक्षिण्यमपि करोति ।

**अनसूया—** सहि मम वि कोदूहलं । पुच्छिस्सं दाव णं । (प्रकाशम्) अज्ज, महुरालावजणिदो विस्सासो मं मन्तावेदि—कदमो अज्जेण राएसिवंसो अलंकरीअदि? कदमो विरहपज्जूसुअजणो किदो देसो? किंणिमित्तं सुउमारो तवोवणपरिस्समस्स अत्ता पत्तदं णीदो?

सखि, ममापि कौतूहलम् । प्रक्ष्यामि तावदेनम् । आर्य, मधुरालापजनितो विश्वासो मां मन्त्रयते—कतम आर्येण राजर्षिवंशोऽलंक्रियते? कतमो विरहपर्युत्सुकजनः कृतो देशः? किंनिमित्तं सुकुमारस्तपोवनपरिश्रमस्यात्मा पात्रतां नीतः?

**शकुन्तला—** (आत्मगतम्) हिअअ, मा उत्तम्म । एसा तुए चिन्तिदं मन्तेदि अणसूआ ।

---

गाम्भीर्यं हृदये मुख्यं तद्व्यञ्जिकायामाकृतावुपचरितम्; गाम्भीर्यव्यञ्जिकेत्यर्थः । अत्राभिगम्यत्वाधृष्यत्वे व्यज्येते । प्रभवन् प्रभुः । दाक्षिण्यं परच्छन्दानुवर्तनम् । अपिः प्रभुत्वदाक्षिण्ययोर्विरोधद्योतकः । प्रष्टुमवतारं करोति— **आर्येति** । क्रमेण लोकोत्तरैराकारेङ्गितादिभिस्तस्य राजर्षित्वमवधार्य, तत्प्रकाशयन्ती वंशविषयादीन् पृच्छति—**कतम इति** । आत्मा देहः । राज्ञस्तत्त्वजिज्ञासया प्रष्टुमशक्य-

हृदय, मा उत्ताम्य । एषा त्वया चिन्तितं मन्त्रयते अनसूया ।

**राजा**— (आत्मगतम्) कथमिदानीमात्मानं निवेदयामि, कथं वात्मापहारं करोमि । भवतु । एवं तावदेनां वक्ष्ये । (प्रकाशम्) भवति, यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः, सोऽहमाश्रमिणामविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः ।

**अनसूया**— सणाहा दाणिं धम्मआरिणो ।

सनाथा इदानीं धर्मचारिणः ।

---

तया च खिन्नं हृदयमाह— **हृदयेति** । चिन्तितं प्रष्टव्यत्वेन निरूपितम् । सख्यैवं पृष्ट आत्मापहारस्याधर्मत्वादात्मनिवेदनम्, आत्मनिवेदनस्य ग्राम्यत्वात् प्रकृतविघातकत्वाच्च आत्मापहारम् उभयमपि चिकीर्षस्तस्योपायं विमृशति— **कथमिति** । कथमिति विमर्शे । वा-शब्दः समुच्चये । अपहारः अन्यत्वेन कथनम्; तदधर्म्यम्, 'योऽन्यथा सन्तु भाषते । स पापकृत्तमो लोके तेन आत्मापहारकः' इति स्मृतेः । विमृश्य कंचिदुपायमवधार्य आह— **भवत्विति** । भवतीति । हे भवति, पौरवेण राज्ञा दुष्यन्तेन । धर्माधिकारे धर्मरक्षारूपेऽधिकारे । अविघ्नक्रियोपलम्भाय अविघ्नानां क्रियाणाम् उपलम्भाय, क्रिया निर्विघ्ना उत नेति ज्ञातुमिदं धर्मारण्यमागतः; राज्ञो दुष्यन्तस्य धर्मसचिवोऽहम्, धर्मरक्षार्थमिहागत इत्यर्थः । आ-

(शकुन्तला शृङ्गारलज्जां रूपयति ।)

**सख्यौ**— (उभयोराकारं विदित्वा जनान्तिकम्) हला सउन्दले, जइ एत्थ अज्ज तादो संणिहिदो हवे ।

हला शकुन्तले, यद्यत्राद्य तातः संनिहितो भवेत् ।

**शकुन्तला**— तदो किं भवे ?

ततः किं भवेत् ?

**सख्यौ**— इमं जीविदसव्वस्सेण वि अदिहिं किदत्थं करिस्सदि ।

---

त्मापहारानुगुणोऽयम् । पौरवेण राज्ञा इलिलनाम्ना मम पित्रा । धर्माधिकारे स्वधर्मरूपे अधिकारे प्रजापालनलक्षणे । नियुक्तोऽभिषेकपूर्वं स्थापितो दुष्यन्त इति प्रसिद्धोऽहमाश्रमिणामविघ्नक्रियोपलम्भाय धर्मारण्यमिदमागत इत्यात्मनिवेदनानुगुणोऽन्तर्गतोऽर्थः । सनाथाः नाथेन रक्षित्रा सह वर्तमानाः सनाथाः । शृङ्गारेण कामसुखेन लज्जा शृङ्गारलज्जा ; यदुक्तम्—'लज्जा नामान्तरुद्भिन्नमान्मथविकारजुगोपायिषारूपा मदनविजृम्भणैव शृङ्गाररसतरङ्गिणी, ययारूढा निर्भरतया तांस्तान् विलासान्नेत्रगात्रविकारपरंपरारूपान् सूते' इति । आकारम् इङ्गितं मान्मथविकाररूपम् । 'आकाराविङ्गिताकृती' इत्यमरः । उभयोः परस्परानुरागमवधार्येत्यर्थः । अवधृतं सूचयन्त्यावाहतुः— **हला इति** । लज्जया तद्वचनमसहमाना मध्ये सरोषमाह— **ततः किं भवेदिति** । उभे वाक्यशेषमाहतुः—

 


इमं जीवितसर्वस्वेनाप्यतिथिं कृतार्थं कुर्यात् ।

**शकुन्तला—** तुह्मे अवेध । किंवि हिअए करिअ मन्तेध । ण वो वअणं सुणिस्सं ।

युवामपेतम् । किमपि हृदये कृत्वा मन्त्रयेथे । न युवयोर्वचनं श्रोष्यामि ।

**राजा—** वयमपि तावद्भवत्योः सखीगतं किंचित्पृच्छामः ।

**सख्यौ—** अज्ज, अणुग्गहो विअ इअं अब्भत्थणा ।

आर्य, अनुग्रह इवेयमभ्यर्थना ।

**राजा—** भगवान्काश्यपः शाश्वते ब्रह्मणि स्थित इति प्रका-

---

इमं जीवितसर्वस्वेनाप्यतिथिं कृतार्थं कुर्यात् । अत्र त्वं हि तस्य जीवितसर्वस्वम्, त्वया कृतार्थं कुर्यादिति व्यज्यते; यद्वक्ष्यति— 'सा खलु भगवतः कुलपतेरुच्छ्वसितम्' इति । व्यङ्ग्यमवगम्याह— **अपेतमिति** । युवामितोऽपसरतमित्यर्थः । कुत इत्याह— किमपीति । न युवयोर्वचनं श्रोष्यामि नाङ्गीकरिष्यामि । अथ तस्यास्तत्त्वं ज्ञातुमारभते— **वयमिति** । यदुक्तम्— 'तथापि तत्त्वत एनामुपलप्स्ये' इति । अपि तावदित्यनेन यथा भवत्यावस्मद्गतम्, तथा वयमपीति व्यज्यते । पृच्छाम इति । भवत्यौ तन्निवेदयतामिति भावः । इवेत्यवधारणे । आर्यस्य प्रार्थनास्माकं हितैवेति भावः । पृच्छति— **भगवानिति** । शाश्वते ब्रह्मणि नैष्ठिकब्रह्मचर्ये । प्रकाशं प्रसिद्धम्,

शम् । इयं च वः सखी तदात्मजेति कथमेतत् ?

**अनसूया**— सुणादु अज्जो । अत्थि कोसिओत्ति गोत्तणामहेओ महाप्पहावो राएसी ।

श्रृणोत्वार्यः । अस्ति कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः ।

**राजा**— अस्ति । श्रूयते ।

**अनसूया**— तं णो पिअसहीए पहवं अवगच्छ । उज्झिअसरीराए संवड्ढणादिहिं तादकस्सवो से पिदा ।

तमावयोः प्रियसख्याः प्रभवमवगच्छ । उज्झितशरीरायाः संवर्धनादिभिस्तातकाश्यपोऽस्याः पिता ।

**राजा**— उज्झितशब्देन जनितकुतूहल आ मूलाच्छ्रोतुमिच्छामि ।

---

तस्य न व्यभिचारः । कथमेतत्, संगच्छत इति शेषः । कौशिक इति गोत्रनामधेयः । कुशिकगोत्रापत्यं विश्वामित्रः । प्रभवं जनकम् । उज्झितेति । प्रसवानन्तरं जनन्या त्यक्तं शरीरं यस्याः । पिता 'शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते । क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्मसाधने' इति भारतोक्तेः । एवं पितरि ज्ञाते मातृजिज्ञासयाह— उज्झितशब्देनेति । शब्दग्रहणम् अर्थस्य सम्यग्ज्ञानाभावात् । आ मूलात् आदित आरभ्य ।

**अनसूया**— सुणादु अज्जो । पुरा किल तस्स राएसिणो उग्गे तवसि वट्टमाणस्स किंवि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा णिअमविग्घकारिणी पहिदा ।

शृणोत्वार्यः । पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नामाप्सरा नियमविघ्नकारिणी प्रहिता ।

**राजा**— अस्त्येतदन्यसमाधिभीरुत्वं देवानाम् ।

**अनसूया**— तदो वसन्तोदारसमए से उम्मादइत्तअं रूवं देक्खिअ...... [इत्यर्धोक्ते लज्जया विरमति ।

ततो वसन्तावतारसमये तस्या उन्मादयितृ रूपं दृष्ट्वा......

**राजा**— परस्तादवगम्यत एव । सर्वथाप्सरःसंभवैषा ।

**अनसूया**— अह इं ।

अथ किम् ।

---

**अस्तीति ।** अन्येषां स्वव्यतिरिक्तानाम् । अनेनाभिसंध्यविचारो व्यज्यते । अतः परस्तात् वचनशेषः अवगम्यत एव, न वक्तव्यमिति भावः । अवगतमाह— सर्वथेति । अप्सरःशब्देन सामान्यवाचिना विशेषो लक्ष्यते—मेनकासंभवेति । उक्तमनुवदति—अथ किमिति ।

**राजा**— उपपद्यते ।

**मानुषीषु कथं वा स्यादस्य रूपस्य संभवः ।**
**न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥ २१ ॥**

(शकुन्तला लज्जयाधोमुखी तिष्ठति ।)

**राजा**— (आत्मगतम्) लब्धावकाशो मे मनोरथः । किंतु सख्याः परिहासोदाहृतां वरप्रार्थनां श्रुत्वा धृतद्वैधीभावकातरं मे मनः ।

**प्रियंवदा**— (सस्मितं शकुन्तलां विलोक्य नायकाभिमुखी भूत्वा)

---

उपपद्यते; कुत इत्याह— **मानुषीष्विति** । अत्र रूपेण रूपवत्याक्षिप्यते । एवंविधसौन्दर्यवत्या अस्या मानुषीषु संभवो नास्तीत्यर्थः । प्रभया चञ्चलं ज्योतिः विद्युत् । दृष्टान्तोऽत्रालंकारः, रूपस्य प्रभायाम्, रूपवत्या अस्या ज्योतिषि, मानुषीणां वसुधातले, संभवस्योदये च प्रतिबिम्बनात्; 'दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्' इति । लज्जया प्रत्यक्षस्तुतिनिमित्तया । तत्त्वज्ञानेन गम्येयमिति निश्चित्याह— **लब्धेति** । मनोरथः अभिलाषः । 'वाञ्छाऽभिलाषः अलिप्सा मनोरथः' इत्यमरः । लब्धावकाशत्वं विषयौचित्यात् । अन्यवरानुशङ्कया पुनरपि गम्यत्वं प्रति संदिहान आह— किंत्विति । परिहासोदाहृता 'जह वणजोसिणा—' इत्यादिः । द्वैधीभावः संशयः वरप्रार्थना सत्या वा न वेत्येवंरूपः । कातरं विषयानौचित्यभीरु । सस्मितावलोकनं हृदयज्ञानसूचनार्थम् । आकारेङ्गितादिभिर्विवक्षा-

किं पुणो वि वत्तुकामो अज्जो ?

किं पुनरपि वक्तुकाम आर्यः ?

(शकुन्तला सखीमङ्गुल्या तर्जयति ।)

**राजा**—सम्यगुपलक्षितं भवत्या । अस्ति नः सच्चरितश्रवणलोभादन्यदपि प्रष्टव्यम् ।

**प्रियंवदा**— अलं विआरिअ । अणिअन्तणणिओओ तवस्सिअणो णाम ।

अलं विचार्य । अनियन्त्रणनियोगस्तपस्विजनो नाम ।

**राजा**—इति सखीं ते ज्ञातुमिच्छामि ।

**वैखानसं किमनया व्रतमा प्रदाना-**
**द्व्यापाररोधि मदनस्य निषेवितव्यम् ।**
**अत्यन्तमेव मदिरेक्षणवल्लभाभि-**
**राहो निवत्स्यति समं हरिणाङ्गनाभिः ॥ २२ ॥**

---

मवधार्याह— किं पुनरपीति । तर्जनं धाष्टर्यप्रसङ्गभयात् । उपलक्षितं लक्षणैरुन्नीतम् । सच्चरितेति । न कार्यान्तरापेक्षयेति भावः । अलं विचार्य, प्रष्टव्यं पृच्छेति भावः । अनियन्त्रणेति । अनियन्त्रणः अप्रतिबन्धः नियोगो यस्मिन् ॥

संदिह्यमानं तस्या अन्यवराभिलाषं निश्चिचीषुराह— **इतीति** । वक्ष्यमाणपरामर्शी । **वैखानसमिति** । मनसः कामसुखोन्मुखीकरणं

**प्रियंवदा—** अज्ज, धम्माचरणे वि परवसो अअं जणो । गुरुणो उण से अणुरूववरप्पदाणे संकप्पो ।

आर्य, धर्माचरणेऽपि परवशोऽयं जनः । गुरोः पुनरस्या अनुरूपवरप्रदाने संकल्पः ।

**राजा—** (आत्मगतम् ।) न खलु दुरवापेयं प्रार्थना ।

**भव हृदय साभिलाषं**
**संप्रति संदेहनिर्णयो जातः ।**
**आशङ्कसे यदग्निं**
**तदिदं स्पर्शक्षमं रत्नम् ॥ २३ ॥**

---

मदनस्य व्यापारः, तं रोद्धुं शीलवत् । अनेन तस्यास्तदधिकारित्वं व्यज्यते ; तेन प्रदानात्पूर्वं समाप्यत्वं च । अत्यन्तम् आमृति ; यथास्यैव 'किं वा तवात्यन्तवियोगमोघे' इति । मदिरैः सुन्दरैरीक्षणैः स्वेक्षणसादृश्यात् वल्लभाभिः । समं सह । इयमित्यर्थादायाति । हरिणसहवासो वैखानसव्रतमेव । अतोऽस्या मुनिव्रतं यावद्विवाहं यावज्जीवं वेति फलितोऽर्थः । आर्य धर्माचरणेऽपि ; किमुत कामाचरणे । अयं जनः इयम् । परवशः गुर्वधीनः । तर्हि गुरोर्मतं किमित्याह— **गुरोरिति** ॥

**दुरवापेति** । प्रार्थना प्रार्थ्यत इति प्रार्थना, प्रार्थ्यमानोऽर्थः ; अनुरूपो वर इति यावत् । सखीवचनेनान्यानुरागाभावं निश्चिन्वन्, तदाशङ्काकातरं हृदयमाह— **भवेति** । हे हृदय । संप्रति

**शकुन्तला—** (सरोषमिव) अणसूए, गमिस्सं अहं ।

अनसूये, गमिष्याम्यहम् ।

**अनसूया—** किंणिमित्तं ?

किंनिमित्तम् ?

**शकुन्तला—** इमं असंबन्धप्पलाविणिं पिअंवदं अज्जाए गोदमीए णिवेदेदुं ।

इमामसंबन्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयितुम् ।

---

साभिलाषं भव, यथेष्टं तामभिलष । कुत इत्याह— संदेहनिर्णयो जातः, संदिह्यत इति संदेहः, संदिग्धस्य निर्णय इत्यर्थः । संदेहनिर्णययोः प्रकारमाह— आशङ्कस इति । यत् रत्नम् अग्निस्पर्शाक्षमम् आशङ्कसे, तदिदं स्पर्शक्षमम् । स्पर्शाक्षममपि रत्नमस्ति, 'न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम्' इति । अत्राप्रस्तुतात्सदृशात् सदृशान्तरं प्रस्तुतं प्रतीयते । यां त्वमन्यानुरागादगम्यामाशङ्कसे, तदभावात्सा गम्यैवेत्यर्थः । अप्रस्तुतप्रशंसात्रालंकारः । 'अप्रस्तुतप्रशंसा सा या सैव प्रस्तुताश्रया । कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति । तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा' इति ॥

वरालापजनितया लज्जयावस्थातुमसमर्था सरोषमाह— **अनसूये गमिष्याम्यहम्** । असंबन्धप्रलापिनीं संबन्धरहितं प्रलपनशीलाम् । गौतमीति मातृस्थानीया काचिद्वृद्धतापसी । राजश्छन्दमनुवर्तमाना

**अनसूया**— सहि, ण जुत्तं अकिदसक्कारं अदिहिविसेसं उज्झिअ अस्समवासिणो जणस्स सच्छन्ददो गमणं।

सखि, न युक्तमकृतसत्कारमतिथिविशेषमुज्झित्वा आश्रमवासिनो जनस्य स्वच्छन्दतो गमनम्।

(शकुन्तला न किंचिदुक्त्वा प्रस्थिता।)

**राजा**— आः, कथं गच्छति। (ग्रहीतुमिच्छन्निगृह्यात्मानम् आत्मगतम्) अहो चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः। अहं हि

**अनुयास्यन्मुनितनयां**
**सहसा विनयेन वारितप्रसरः।**
**स्थानादनुच्चलन्नपि**
**गत्वेव पुनः प्रतिनिवृत्तः॥ २४॥**

---

गमनं निरुन्धे— **सखि न युक्तमिति**। अतो मा गा इति भावः। आत्मानं मनः। चेष्टाप्रतिरूपिका चेष्टासदृशी। मनोवृत्तिः इच्छा। सामान्येनोक्तं विशेषे उपयोजयति— **अहं हीति**। अनुयास्यन् अनुगमिष्यन्, अनुयातुमिच्छन्निति भावः। मुनितनयामिति अत्यन्तानौचित्यं व्यज्यते। वारितप्रसरः निरुद्धानुयानः। इवेति प्रतीतिमात्रे; अनुगम्य प्रतिनिवृत्त इति मे प्रतिभातीत्यर्थः॥

**प्रियंवदा—** (शकुन्तलां निरुध्य) हला, ण दे जुत्तं गन्तुं ।
हला न ते युक्तं गन्तुम् ।

**शकुन्तला—** (सभ्रूभङ्गम्) किंणिमित्तं ?
किंनिमित्तम् ?

**प्रियंवदा—** रुक्खसेअणे दुवे धारेसि मे । एहि दाव । अत्ताणं मोचिअ तदो गमिस्ससि । [इति बलादेनां निवर्तयति ।
वृक्षसेचने द्वे धारयसि मे । एहि तावत् । आत्मानं मोचयित्वा ततो गमिष्यसि ।

**राजा—** भद्रे, वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये । तथा ह्यस्याः

**स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-**
**दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।**
**बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं**
**बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥**

---

मे मह्यम् । 'धारेरुत्तमर्णः' इति संप्रदानत्वम् । धारयसि ऋणत्वेन धत्से । ततः ऋणात् ॥

तद्विरहमसहमान आह— **भद्रे** इति । वृक्षसेचनादेव अर्थादनुष्ठितात् । लक्षये लक्षणैस्तर्कयामि । तान्याह— **स्रस्तेति** ।

तदहमेनामनृणां करोमि । [इत्यङ्गुलीयं दातुमिच्छति।

(उभे नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः ।)

**राजा—** अलमन्यथा संभाव्य । राज्ञः परिग्रहोऽयम् ।

**प्रियंवदा—** तेण हि णारिहदि एदं अङ्गुलीअअं अङ्गुलीविओअस्स । तुह वअणेण एव्व अणिरिणा दाणिं एसा । (किंचिद्विहस्य) हला सउन्दले, मोइदा सि इमिणा अणुअम्पिणा अज्जेण, अहवा महाराएण । गच्छ दाणिं ।

तेन हि नार्हत्येतदङ्गुलीयकमङ्गुलीवियोगस्य । तव वचनेनैवानृणेदानीमेषा । हला शकुन्तले, मोचिता-

---

स्रस्तांसौ सातिशयनतांसौ । अतिमात्रेति नैसर्गिकलौहित्यापेक्षया । वेपथुं कम्पम् । प्रमाणाधिकः दीर्घः । बद्धं संजातम् । कर्णशिरीषरोधि कर्णाभरणम् आगण्डविलम्बिकेसरं शिरीषकुसुमं रोद्धुं शीलवत् । जालकं समूहः । घर्माम्भसां स्वेदबिन्दूनाम् । स्रंसिनि शिथिले । पर्याकुलाः अंसलम्बिनः । अत्र स्वभावोक्त्या रतिकेलिविरतिपरिश्रममनुस्मारयन्त्या आलम्बनविभावोऽभिनवीक्रियते ॥

**तदिति** । यस्मादियं स्वयमृणमोचनाशक्ता, तस्मात् । नामाङ्किता मुद्रा नाममुद्रा अङ्गुलीयकम् । दुष्यन्तः स्वयमेवायमिति परस्परावलोकनम् । अलमिति । अन्यथा नायं राजसचिव इति । संभावना ऊहः । तर्हि कथं नाममुद्रेत्याह— **राज्ञ इति** । तेन

स्यनेनानुकम्पिनार्येण, अथवा महाराजेन । गच्छे-
दानीम् ।

**शकुन्तला**— (आत्मगतम्) जइ अत्तणो पहविस्सं । (प्रकाशम्) का तुमं विसज्जिदव्वस्स वा रुन्धिदव्वस्स वा ।

यद्यात्मनः प्रभविष्यामि । का त्वं विस्रष्टव्यस्य वा रोद्धव्यस्य वा ।

**राजा**— (शकुन्तलां विलोक्य आत्मगतम्) किं नु खलु यथा वयमस्यामेवमियमप्यस्मान्प्रति स्यात्? अथवा लब्धा-

---

हि नार्हत्येतदङ्गुलीयकमङ्गुलीवियोगस्य, स्वामिप्रसादस्यावमानप्रसङ्गात् । तदा कथमृणमोक्ष इत्याह— **तवेति** । महाराजेनेति । अङ्गुलीयस्य तदीयत्वात्; महाराज एवायमिति व्यज्यते । किंचिद्विहासश्च तदभिप्रायः । यद्यात्मनः प्रभविष्यामि, तर्हि गमिष्यामीति शेषः । आत्मनः मनसः । यदि मनोऽमुं विहाय गन्तुं विधेयम्, तर्हि गमिष्यामीत्यर्थः । वियोगासहत्वात् गन्तुमसमर्था तदकरणे निमित्तमुत्पादयति— **का त्वमिति** । वा-शब्दः समुच्चये, भावे तव्यः । न त्वं मम विसर्जननिरोधयोः स्वामिनी; अतस्त्वया विसृष्टा न गच्छामीति भावः ॥

एवं क्रमेण तां प्रति प्रवृद्धाभिलाषो मयीयमनुरागिणी वा न वेति विकल्पयति— **अथवेति** । अलं विकल्पेनेत्यर्थः । कुत इत्याह— **लब्धेति** । प्रार्थना अनुरागः । अनुरागस्यावकाशला-

वकाशा मे प्रार्थना । कुतः ?

**वाचं न मिश्रयति यद्यपि मद्वचोभिः**
**कर्णं ददात्यभिमुखं मयि भाषमाणे ।**
**कामं न तिष्ठति मदाननसंमुखी सा**
**भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ २६ ॥**

( आकाशे )

भो भोस्तपस्विनः, संनिहितास्तपोवनसत्त्वरक्षायै भवत । प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्तः ।

**तुरगखुरहतस्तथा हि रेणु-**
**र्विटपविषक्तजलार्द्रवल्कलेषु ।**

---

भोऽनुरागिण्यामेव स्यात्, अतो मयीयमनुरागिण्येवेत्यर्थः । कुत इत्याह— **वाचमिति** । सा मम वचोभिः वाचम् आत्मीयां न मिश्रयति, मम वचसां प्रतिवचनं न ददातीत्यर्थः । मयि अभिमुखं भाषमाणे कर्णं ददाति, सावधाना संभाषणं शृणोति । मदानन-संमुखी मदाननाभिमुखी । अत्र संभाषणे कर्णदानं दृष्टेरनन्यवि-षयत्वं च शुश्रूषादिदृक्षाव्यञ्जके अनुरागानुभावौ । पात्रप्रवेशं विना वचनम् आकाशः । सत्त्वरक्षायै सत्त्वस्य सत्त्वकार्यस्य धर्मस्य, यदि वा सत्त्वानां जन्तूनाम् ॥

**तुरगेति** । परिणतेन अस्तोन्मुखेन अरुणेन सूर्येण तत्प्रभया

पतति परिणतारुणप्रकाशः
शलभसमूह इवाश्रमद्रुमेषु ॥ २७ ॥

अपि च ।

तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसंजातपाशः ।
मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः ॥

( सर्वाः कर्णं दत्त्वा किंचिदिव संभ्रान्ताः ।)

**राजा—** ( आत्मगतम् ) अहो धिक् । सैनिका अस्मदन्वेषिणस्तपोवनमुपरुन्धन्ति । भवतु । प्रतिगमिष्यामस्तावत् ।

**सख्यौ—** अज्ज, इमिणा आरण्णिअवुत्तन्तेण पज्जाउलह्म । अणुजाणाहि णो उडअगमणस्स ।

---

प्रकाश उज्ज्वलः । शलभानां खद्योतानाम् ॥

तीव्रेति । तीव्रेण आघातेन प्रहारेण तरुविषयेण प्रतिहतो भग्नः तरुस्कन्धे तरोर्मध्यप्रदेशे लग्नः निमग्नः एको दन्तो यस्य । 'अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधेस्तरोः' इत्यमरः । अत्र वनगजगतत्वेन मूर्तविघ्नत्वमुत्प्रेक्ष्यते ; तर्वाघातादिर्निमित्तम् । आश्रमनाशस्यावश्यंभावः फलम् ॥

आर्य, अनेनारण्यकवृत्तान्तेन पर्याकुलाः स्मः । अनुजानीहि न उटजगमनाय ।

**राजा**— (ससंभ्रमम्) गच्छन्तु भवत्यः । वयमप्याश्रमपीडा यथा न भवति, तथा प्रयतिष्यामहे ।

(सर्वे उत्तिष्ठन्ति ।)

**सख्यौ**— अज्ज, असंभाविदसक्कारं अदिहिविसेसं भूओ वि दंसणणिमित्तं उज्झामो ।

आर्य, असंभावितसत्कारमतिथिविशेषं भूयोऽपि दर्शननिमित्तमुज्झामः ।

**राजा**— मा मैवम् । दर्शनेनैव भवतीनां पुरस्कृतोऽस्मि ।

---

राजानमावर्जयति— संभावना सत्कारः, असंभावितः असत्कृतः सत्कारः तत्साधनफलमूलादिर्यस्मै सोऽसंभावितसत्कारः । भूयो दर्शननिमित्तं यथा भवति तथा भूय आगत्यास्माकं सत्कारोऽवश्यं स्वीकर्तव्य इति भावः ।

मा मा एवम् असत्कृतसत्कारमिति मा वादीः । कुत इत्याह— **दर्शनेनैवेति** । अनेन दर्शनस्यान्तःकरणसंतर्पणत्वं व्यज्यते ।

(शकुन्तला राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता ।)

**राजा—** मन्दोत्सुकोऽस्मि नगरगमनं प्रति । यावदानुयात्रिकान्समेत्य नातिदूरे तपोवनस्य निवेशयामि । न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्तयितुम् ।

मम हि—

**गच्छति पुरः शरीरं**

**धावति पश्चादसंस्तुतं चेतः ।**

---

**सव्याजमिति** । व्याजप्रकारो वक्ष्यते— 'दर्भाङ्कुरेण' इत्यादिना ।

तत्संनिधिपरित्यागमसहमान आह— **मन्देति** । मन्दम् उत्सुकः मन्दोत्सुकः, अनुत्सुक इति यावत् । नगरं न गमिष्यामीति भावः । गमनाभावे प्रतिपत्तिमाह— **यावदिति** । आनुयात्रिकान् अनुचरान् । तत्राप्यशक्त आह— **न खल्विति** । शकुन्तलायां व्यापारः अङ्गप्रत्यङ्गसंक्रमणलक्षणः; यदि वा शकुन्तलाया व्यापारः स्निग्धवीक्षणमन्दगमनादिरनुरागद्योतकः । आत्मानं मनः ।

उक्तमुपपादयति— **मम हीति** । असंस्तुतम् अपरिचितम्,

चीनांशुकमिव केतोः
प्रतिवातं नीयमानस्य ॥ २९ ॥

[इति निष्क्रान्ताः सर्वे ।

## इति प्रथमोऽङ्कः ॥

---

अर्थात् प्रियतमावियोगेन । चीनांशुकं चीनदेश्यपट्टांशुककृता पताका ॥

इति अभिरामविरचिते अभिज्ञानशाकुन्तलदिङ्मात्रदर्शने
प्रथमोऽङ्कः ॥



# द्वितीयोऽङ्कः ॥

—*—

( ततः प्रविशति विदूषकः । )

**विदूषकः—** ( निःश्वस्य ) भो दिट्ठं एदस्स मिअआसीलस्स रण्णो वअस्सभावेण णिव्विण्णो म्हि । अअं मिओ अअं वराहो अअं सद्दूलो त्ति मज्झंदिणे वि गिम्हविरलपाअवच्छायासु वणराईसु आहिण्डीअदि । पत्तसंकरकसाआइं कदुण्हाइं गिरिणईजलाइं पीअन्ति । अणिअदवेळं सुल्लमंसभूइट्ठं आहारं अण्हीअदि । तुरगाणुधावणकण्डइदसन्धिणो रत्तिम्मि वि णिकामं सइदव्वं णत्थि । तदो महन्ते एव्व पच्चूसे दासीएपुत्तेहिं सउणिलुद्धएहिं वणग्गहणकोलाहलेण पडिबोधिदो म्हि । एदावन्तेण वि दाव पाडा ण णिक्कमदि । तदो गण्डस्स उवरि पिडआ संवुत्ता । हिओ किल अम्हेसु ओहीणेसु तत्तहोदो मआणुसारेण अस्समपदं पविट्ठस्स तावसकण्णआ सउन्दला णाम मम उदरस्स अधण्णदाए दंसिदा । संपदं णअरगमणस्स कहं वि ण करेदि । अज्ज वि से तं एव्व चिन्तअन्तस्स

पभादं अक्खीसु । का गदी । जाव किदाचारपडिकम्माणं वयस्सं पेक्खामि । (इति परिक्रम्यावलोक्य च) एसो बाणासणहत्थाहिं जवणीहिं वणपुप्फमालाधारिणीहिं परिवुदो इदो एव्व आअच्छदि वअस्सो । होदु । अङ्गमेत्तविअलो विअ भविअ चिट्ठिस्सं । जइ एव्वं वि णाम विस्समं लहेअं । (इति दण्डकाष्ठमवलम्ब्य स्थितः ।)

भो दृढम् एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि । अयं मृगोऽयं वराहोऽयं

---

एवं धर्मारण्ये नायकयोर्लब्धदर्शनोत्सवयोः ।
नयनप्रीतिश्चित्तासङ्गश्चोभौ प्रदर्शितौ सम्यक् ॥

अङ्कारम्भे दीनां स्वावस्थां विमृशता वयस्येन ।
अधुना संसूच्येते नेतुः संकल्पजागरणे ॥

यदुक्तम्— 'नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः । उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः' इति । नृपतेर्नर्मसचिवः सह तेन वनं गतः । क्षुत्पिपासादिभिर्दुःखैर्निर्विण्णः प्राह— **भो इति ।** भो इति चिन्तायाम् । चिन्तानिश्वासौ निर्वेदानुभावौ । 'तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना । तत्र चिन्ताश्रुनिश्वासवैवर्ण्योच्छ्वासदीनताः' इति । दृढं सातिशयम् । कुत इत्याह— **अयं मृगोऽयं वराहोऽयं शार्दूल इति ।** उक्त्वेति शेषः । आ-

शार्दूल इति मध्यंदिनेऽपि ग्रीष्मविरलपादपछायासु वनराजीष्वाहिण्ड्यते । पत्रसंकरकषायाणि कदुष्णानि गिरिनदीजलानि पीयन्ते । अनियतवेलं शूल्यमांसभूयिष्ठमाहारमश्यते । तुरगानुधावनकण्टकितसक्थस्य रात्रावपि निकामं शयितव्यं नास्ति । ततो महत्येव प्रत्यूषे दास्याःपुत्रैः

---

हिण्ड्यते भ्राम्यते । अत्र कालदेशावस्थाभिरातपपीडा व्यज्यते; तया क्षुत्पिपासे च । तत्प्रतीकाराभावमाह— पत्रसंकरकषायाणि । पत्राणां जीर्णपतितानां संकरेण तद्रसमिलितत्वेन कषायाणि तुवराणि । 'तुवरस्तु कषायोऽस्त्री' इत्यमरः । कदुष्णानि ईषदुष्णानि । शूल्यमांसभूयिष्ठः, शूले कृत्वा कृतपाकं शूल्यम्, तादृशं मांसं भूयिष्ठं बहुतरं यस्मिन्। आह्रियत इत्याहारः भोज्यम् । आहारमिति प्राकृते पुंनपुंसकयोरनियमात् । अश्यते, यदुक्तमारण्यपर्वणि— 'रुरून्कृष्णमृगांश्चैव मेध्यानन्यान्वनेचरान् । उन्मथ्य विविधैर्बाणैर्ब्राह्मणेभ्यो न्यवेदयन्' इति, 'ब्राह्मणार्थे पराक्रान्ताः शुद्धैर्बाणैर्महारथाः । निघ्नन्तो भरतश्रेष्ठा मेध्यान्बहुविधान्मृगान्' इति च । एवमन्नपानवैकल्यमुक्त्वा निद्रावैकल्यमाह— तुरगानुधावनकण्टकितसक्थस्य तुरगस्य राज्ञारुढस्य अनुधावनेन कण्टकिते संजातकण्टके निमग्नकण्टके सक्थिनी ऊरू यस्य; हेतुभावगर्भमेतत् । शयितव्यं नास्ति । भावे तव्यः । निकामशब्देन स्वच्छन्दस्य वैरल्यमुक्तम्, न त्वभावः; अत आह— ततः महत्येव प्रत्यूषे

श्वगणिलुब्धकैर्वनग्रहणकोलाहलेन प्रतिबोधितोऽस्मि । एतावतापि तावत् पीडा न निष्क्रामति । ततो गण्डस्योपरि पिटका संवृत्ता । ह्यः किलास्मास्ववहीनेषु तत्रभवतो मृगानुसारेणाश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला नाम ममोदरस्याधन्यतया दर्शिता । सांप्रतं नगरगमनस्य कथामपि न

---

प्रभातारम्भे । दास्याःपुत्रैरित्येकं पदम् । आक्रोशे अलुक् । निकृष्टैरित्यर्थः । श्वगणिलुब्धकैः, शुनां गणः श्वगणः, श्वगणोऽस्त्येषामिति श्वगणिनः, श्वगणिनश्च त एव लुब्धकाः किराताः श्वगणिलुब्धकाः, तैः । वनग्रहणकोलाहलेन वनग्रहणं वनशोधनम् । यदुक्तम्— 'लुब्धकैश्च श्वगणिभिरपास्तस्तेनव्यालपराबाधभयं चललक्षपरिचयार्थं मृगयारण्यं गच्छेत्' इति । अत्र निर्वेदस्य हेतुर्वनराज्याहिण्डनादिः, तस्य हेतुर्वयस्यभावः । अथ परिजनाच्छ्रुतं राज्ञः शकुन्तलाकामुकत्वं हृदि निधायाह— एतावतापि तावत् उक्तेन दुःखानुभवेन । पीडा दुःखानुभवलक्षणा । न निष्क्रामति न पर्यवस्यति ; इतः परमपि दुःखानुभवः स्यात् । ततः तस्मात् । गण्डस्य गडोरुपरि । पिटका विस्फोटः । संवृत्ता । 'विस्फोटः पिटकस्त्रिषु' इत्यमरः । पीडाया उपरि पीडा गण्डस्योपरि पिटकेवातिदुःसहेत्यर्थः । पीडान्तरस्य हेतुमाह— ह्यः किलास्मासु । अवहीनेषु मार्गभ्रष्टेषु । अत्र राजकर्तृके शकुन्तलादर्शने निजोदरनिर्भाग्यतायाः प्रयोजककर्तृत्वारोपेण निर्वेदस्व-

करोति । अद्यापि अस्य तामेव चिन्तयतः प्रभातमक्ष्णोः । का गतिः । यावत्कृताचारप्रतिकर्माणं वयस्यं पश्यामि । एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृत इत एवागच्छति वयस्यः । भवतु । अङ्गमात्रविकल इव भूत्वा स्थास्यामि । यद्येवमपि नाम विश्रमं लभेय ।

॥ प्रवेशकः ॥

---

रूपभूता स्वावमानना व्यज्यते । दर्शनस्य पीडाहेतुत्वमाह— सांप्रतं नगरगमनस्य कथामपि न करोति । कुत इत्याह— अद्यापि; न दर्शनदिन एव । प्रभातमक्ष्णोः; अनेन निद्राभाव उक्तः । यथानर्घराघवे 'धिक्चिन्तया रजनिरक्षिषु नः प्रभाति' इति । का गतिः किं मे शरणम् । एवं शरणमन्विच्छुश्चिकीर्षितमनुसंधायाह— यावत्, कृताचारप्रतिकर्माणम् आचारः संध्योपासनादिः, प्रतिकर्म तच्छेषभूतं मण्डनम् । 'प्रतिकर्म प्रसाधनम्' इत्यमरः । बाणासनहस्ताभिः; यथा कर्पूरमञ्जर्याम्— 'अकुंठिअको अंडअट्ठीओतपुंखसरपाणीओ' इति । यवनिकाभिः आसन्नपरिचारिकाभिः । वनपुष्पमालाधारिणीभिरिति, देशौचित्यात् । किमपि शरणमवधार्याह— भवतु अङ्गमात्रविकलः सर्वाङ्गविकलः । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । किं तत इत्याह— यद्येवमपि नाम विश्रमं लभेय ॥

( ततः प्रविशति यथानिर्दिष्टपरिवारो राजा । )

राजा—

कामं प्रिया न सुलभा
मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे
रतिमुभयप्रार्थना कुरुते ॥ १ ॥

---

एवं दयितामेव ध्यायन्निष्क्रम्य नृपतिराश्रमतः । तन्नातिदूरविपिनप्रदेशाविनिवेशितानुचरः ॥ तस्मिन्मनोरथैर्नीत्वा निःसंवेशो निशीथिनीम् । समाप्य संध्यानियमं संशान्तमृगयारतिः ॥ कुलशीलवयोरूपैरनुरूपां शकुन्तलाम् । ध्यायन्समागमोपायचिन्ताव्यापृतमानसः ॥ गुर्वधीना हि सा नात्र गुरुः संनिहितस्ततः । अचिरात्संगमस्तस्या न स्यादिति विचिन्तयन् ॥ उत्कण्ठितोऽतिवेलं मयीयमनुरागिणीति संचिन्त्य । आशाबन्धेन मनागाश्वास्य प्राह— **काममिति** । काममिति अकामानुमतौ । तत्र हेतुमाह— मनस्त्विति । तद्भावेति । तस्या भावस्य अनुरागस्य दर्शनेन पर्यालोचनेन आश्वासितुं शीलवत् । उक्तमुपपादयति— अकृतार्थ इति । मनसिजे अकृतार्थेऽपि ; नायकयोः संयोजनं हि मनसिजस्यार्थः । अतस्तयोः समागमे लब्धे सति हि मनसिजस्य कृतार्थता स्यात् । अतः समागमे अलब्धेऽपीत्यर्थः । अत्र मनसिजस्य संयोजनार्थं उत्साहो व्यज्यते ; तेन तन्निमित्ता पीडा च । उभय-

(स्मितं कृत्वा) एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते। तथा हि—

**स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेषयन्त्या तया**
**यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव।**

---

प्रार्थना परस्परानुरागः। अयमर्थः— समागमे अलब्धेऽपि मदनातुरयोरपि नायकयोरन्योन्यानुरागो रतिं कुरुत इति॥

एवं तदनुरागचर्वणया किंचिदाश्वसन्, 'उपायं चिन्तयन्प्राज्ञो ह्यपायमपि चिन्तयेत्' इति नयेन आश्वासोपायभूतस्य तदनुरागस्यापायं चिन्तयन्नाह— **एवमिति**। एवं तस्या मयि रागोऽस्ति इत्येवम्। आत्माभिप्रायेण संभाविता इष्टजनस्य दयितायाः चित्तवृत्तिर्येन। प्रार्थयिता कामुकः। विडम्ब्यते, विडम्बना— हासकारणं क्रियत इत्यर्थः; यथा— 'अलंकरोति हि जरा नृपवैद्यद्विजन्मनः। विडम्बयति वेशस्त्रीमल्लचारणनर्तकान्' इति। अत्र अप्रस्तुतात् सामान्यात् प्रस्तुतो विशेषः प्रतीयते— प्रार्थयिताहं विडम्ब्ये इति। तस्या मयि रागोऽस्तीत्येतदात्माभिप्रायेण संभावनमेव; अतस्तेनाश्वसन्नहं सुधियां परिहासपात्रमस्मीत्यर्थः॥

यत एवम्, ततस्तस्या स्निग्धवीक्षितादीनां मत्परायणत्वमपि न संभवतीत्याह— **तथा हीत्यादिना मत्परायणमित्यन्तेन**। हिर्हेतौ। स्निग्धं तद्यस्य विषयस्तत्प्रभामिलितो भवेदिति। वीक्षितं यातमिति

मा गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत्किल मत्परायणमहो कामी स्वतां पश्यति ॥

च भावे क्तः । 'सव्याजं विलम्ब्य निष्क्रान्ता' इति यदुक्तम्, तत्र यद्व्यावृत्य वीक्षितम्, तदाह— वीक्षितमिति । वक्ष्यति— 'आसीद्विवृत्तवदना च' इति । अन्यतोऽपि अन्यत्र कुत्रचित् । अत्र वीक्षितस्य स्वस्मिन्याद‍ृच्छिकत्वमुक्तम्, स्निग्धत्वस्य स्वाभाविकत्वं च । 'विलम्ब्य निष्क्रान्ता' इत्यत्र यन्मन्दगमनमासीत् तदाह— यातमिति । विलासः स्त्रीणां शृङ्गारजः क्रियाविशेषः । 'तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु' इति । मा गा इत्युपरुद्धया 'सहि ण जुत्तं गन्तुम्' इति । सासूयमुक्ता 'का तुमं विसज्जिदव्वस्स वा रुद्धिदव्वस्स वा' इति । किलेति असंभाव्ये । 'वार्तासंभाव्ययोः किल' इत्यमरः । मत्परायणं मयि परायणं मत्परम् । 'परायणमभिप्रेते तत्परे परमाश्रये' इति वैजयन्ती । अर्थात् मय्यनुरागाविष्करणः तत्परमित्यर्थः । वक्ष्यति च— 'मिथः प्रस्थाने शालीनयापि काममाविष्कृतो भावस्तत्रभवत्या मयि' इति । तथा हि— अन्यतोऽपि नयने प्रेषयन्त्या तया अर्थान्मय्यपि स्निग्धं वीक्षितमिति यत्, तया नितम्बयोर्गुरुतया विलासादिव मन्दं यातमिति च यत्, मा गा इत्युपरुद्धया तया सा सखी सासूयमुक्तेत्यपि यत्, तत्सर्वं मत्परायणं किलेत्यन्वयः । तदनुरागस्यात्माभिप्रायसंभावितत्वात् तस्या मयि याद‍ृच्छिकं स्वतःस्निग्धं वीक्षितम्, नितम्बगौरवहेतुकं विलाससद‍ृशं न तु विलासरूपं मन्दगमनम्, गमनोपरो-

**विदूषकः—** ( तथास्थित एव ) भो वअस्स, ण मे हत्था-पसरन्ति । वाआमेत्तेण जई करीयसि ।

भो वयस्य, न मे हस्तौ प्रसरतः । वाङ्मात्रेण जयी क्रियसे ।

**राजा—** कुतोऽयं गात्रोपघातः ।

**विदूषकः—** कुदो किल भणासि । सअं अच्छी मह आउ-लीकरिअ अस्सुकारणं पुच्छेसि ।

कुतः किल भणासि । स्वयमक्षिणी मम आकुलीकृ-त्याश्रुकारणं पृच्छसि ।

---

घहेतुकं सखीविषयसासूयवचनं च, एतत्सर्वं मय्यनुरागाविष्क-रणतत्परमित्येतदसंभाव्यमेवेति फलितोऽर्थः । अथ स्वस्यान्यथा-प्रतीतिं सामान्येनोपपादयति— अहो इति । कामी जनः स्वताम् आत्मीयताम् अर्थात् काम्यमानस्य; तस्मिन् लब्धे सत्येव हि त-स्यात्मीयता स्यात्, न काम्यमाने सति । अयमर्थः— कामी जनः काम्यमानं वस्तु लाभात्पूर्वमेव लब्धमिति मन्यते आश्चर्यमेतदिति । अत्र काममित्यादावौत्सुक्यस्य शान्तिः । एवमात्माभिप्रायेत्यादौ शा-न्तस्य तस्योदयः इत्यौत्सुक्यमभिनवीकृतम् ॥

**वाङ्मात्रेण** हस्तमुद्रां विना । तस्य व्याजमजानन्निव पृच्छति— कुतोऽयमिति । 'विकृताङ्गवचोवेषो हास्यकृच्च विदूषकः' इति

**राजा**— न खल्ववगच्छामि ।

**विदूषकः**— भो वअस्स, जं वेदसो खुज्जलीलं विडम्बेदि, तं किं अत्तणो पहावेण, उद णईवेअस्स ।

भो वयस्य, यद्वेतसः कुब्जलीलां विडम्बयति, तत्किमात्मनः प्रभावेण, उत नदीवेगस्य ।

**राजा**— नदीवेगस्तत्र कारणम् ।

**विदूषकः**— मम वि भवं एव्व ।

ममापि भवानेव ।

**राजा**— कथमिव ।

**विदूषकः**— जेण तुए एव्वं राअकज्जाणि उज्झिअ तारिसे आउलप्पदेसे वणचरवुत्तिणा होदव्वं । जं सच्चं पच्चहं सावदसमुच्छारणेहिं संखोदिअसंधिबन्धाणं मम गत्ताणं अणीसो म्हि संवुत्तो । ता पसादइस्सं, विसज्जेहि मं एक्काहं वि दाव विस्समिदुं ।

---

विकृतमाह— **कुत इति** । भणसि अत्र काका प्रश्नः । अश्रुकारणं पृच्छसि, गात्रोपघाते त्वं स्वयं कारणं भूत्वा कारणं पृच्छसि । अजानन्निवाह— **न खल्विति** । कुब्जलीलाविडम्बनं प्रह्वीभावः । ममापि भवानेव, गात्रोपघाते कारणमित्यर्थात् । कुत इत्याह— **येन**

येन त्वयैवं राजकार्याण्युज्झित्वा तादृश आकुलप्रदेशे वनचरवृत्तिना भवितव्यम् । यत्सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसंधिबन्धानां मम गात्राणामनीशोऽस्मि संवृत्तः । तत्प्रसादयिष्यामि, विसृज मामेकाहमपि तावद्विश्रमितुम् ।

**राजा**— (स्वगतम्) अयं चैवमाह । ममापि काश्यपसुतामनुस्मृत्य वनमृगेषु मृगयाविक्लवं चेतः । कुतः ?

**न नमयितुमधिज्यमस्मि शक्तो**
**धनुरिदमाहितसायकं मृगेषु ।**

---

त्वयैवम् । येनेत्यव्ययं यस्मादर्थे । तादृशे आकुलप्रदेशे दुःसंचरेऽरण्ये । वनचरवृत्तिना वनचराणां वृत्तिरिव वृत्तिर्व्यापारः वृत्तिः आजीवो वा यस्य । भवितव्यमिति भावे । महाराजस्य तवात्यन्तमनुचितमेतदिति व्यज्यते । छद्मनाङ्गीकृतमङ्गवैकल्यं साध्ये विश्रमलाभे उपयोगं गमयन्नाह— यत्सत्यं सत्यमेवेत्यर्थः । श्वापदसमुत्सारणैः । 'व्याघ्रादयो वनचराः पशवः श्वापदा मताः' इति केशवः ।

अयमिति । एवं मृगयातिप्रसङ्गस्तवानुचित इति । अपिश्चकारार्थः । अयम् एवमाह च, मम चेतः काश्यपसुतामनुस्मृत्य मृगयाविक्लबमपीत्यन्वयः । अत्र यौगपद्येन मृगयोपसंहारस्य सौकर्यं व्यज्यते । अनुस्मृत्येति । हेतुभावगर्भम् । विक्लबं शिथिलधैर्यम् । मम चेतः

सहवसतिमुपेत्य यैः प्रियायाः
कृत इव मुग्धविलोकितोपदेशः ॥ ३ ॥

**विदूषकः**— (राज्ञो मुखं विलोक्य) उत्तभवं किं वि हिअए करिअ मन्तेति । अरण्णे मए रुदिअं आसि ।

अत्रभवान्किमपि हृदये कृत्वा मन्त्रयते । अरण्ये मया रुदितमासीत् ।

---

प्रियानुस्मरणात् मृगयायां विक्लबं स्यादित्यर्थः । वैक्लब्यस्य कार्यमाह— **न नमयितुमिति** । मृगेषु सारङ्गजातिषु । चेतोवैक्लब्यस्य मृगविशेषविषयत्वम्, तत्कारणस्य काश्यपसुतानुस्मरणस्य तत्रैव तत्संभवात् । तत्र तत्संभवे हेतुमाह— सहेति । उपेत्येति क्रियाविशेषवाचिना तत्सामान्यं लक्ष्यते; सहवासं कृत्वेत्यर्थः । अनेन पात्रगुणो व्यज्यते । तेन विलोकितसौन्दर्यसर्वस्वसंक्रमणम्, संक्रान्तस्य विशेषश्च । अत्र मृगगतत्वेनोत्प्रेक्ष्यमाणात् प्रियाविषयमुग्धविलोकितोपदेशकर्तृत्वादप्रस्तुतात् निमित्तभूतं प्रियाविलोकितसादृश्यं प्रियानुस्मरणहेतुत्वेन प्रस्तुतं प्रतीयते । येषां विलोकितं प्रियाविलोकितसदृशमिति । सदृशवस्तुदर्शनं ह्यनुभूतसदृशवस्त्वन्तरस्मारकम् । यतोऽयं मृगयां परिवदति, मम चेतः प्रियानुस्मरणान्मृगयायां विक्लबं च, अतोऽद्यैव मृगयोपसंहर्तव्येति भावः ॥

**अरण्ये मया रुदितमासीत्**, तवान्यचित्ततया मद्वचनं निष्फल-

**राजा**— (सस्मितम्) किमन्यत्। अनतिक्रमणीयं मे सुहृद्वाक्यमिति स्थितोऽस्मि।

**विदूषकः**— चिरं जीअ।

चिरं जीव। [इति गन्तुमिच्छति।

**राजा**— वयस्य, तिष्ठ। सावशेषं मे वचः।

**विदूषकः**— आणवेदु भवं।

आज्ञापयतु भवान्।

**राजा**— विश्रान्तेन भवता ममाप्यन्यस्मिन्मृगयाया अनायासे कर्मणि सहायेन भवितव्यम्।

**विदूषकः**— किं मोदअखण्डिआए। तेण हि अअं सुगहीदो खणो।

किं मोदकखण्डिकायाम्। तेन ह्ययं सुगृहीतः क्षणः।

---

मासीदित्यर्थः। **किमन्यदिति**। इति स्थितोऽस्मि, इति विचार्य निश्चितोऽस्मि। गमनमनुज्ञातमिति कृत्वाह— **चिरं जीव**। इच्छति आरभते। सावशेषं मे वचः, तदाकर्ण्य गन्तव्यमिति भावः। दयितासमागमोपायचिन्तां हृदि निधायाह अन्यस्मिन्मृगयाया अनायास इति प्रलोभनार्थम्। अतो विश्रम्य त्वरितमागन्तव्यमिति भावः। **खण्डिका** खण्डना।

**राजा—** यत्र वक्ष्यामि ।

**विदूषकः—** तेन हि गृहीतः क्षणः ।

**राजा—** कः कोऽत्र भोः ।

(प्रविश्य)

**दौवारिकः—** (प्रणम्य) आणवेदु भट्टा ।
आज्ञापयतु भर्ता ।

**राजा—** रैवतक, सेनापतिस्तावदाहूयताम् ।

**दौवारिकः—** तह । तथा ।

(इति निष्क्रम्य सेनापतिना सह पुनः प्रविश्य)

एसो अण्णावअणुक्कण्ठो भट्टा इदो दिण्णदिट्ठी एव्व चिट्ठदि । उवसप्पदु अज्जो ।

एष आज्ञावचनोत्कण्ठो भर्तेतो दत्तदृष्टिरेव तिष्ठति । उपसर्पत्वार्यः ।

---

यत्र वक्ष्यामि, तत्रेति शेषः । गृहीतः क्षणः विश्रमावसरः । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः । कः कोऽत्र भोः, विद्यत इति शेषः । आज्ञारूपे वचने उत्कण्ठा त्वरा यस्य । मृगयातिप्रसङ्गेन दूयमानमना अपि । स्वामिचित्तानुवृत्त्यर्थं तान्प्रत्युत्साहवान्मुहुः ॥ सेनापतिराहूतो भूपतिना तत्समीपमुपसर्पन् । तस्याकृ-

A. 6

**सेनापतिः—** ( राजानमवलोक्य ) दृष्टदोषापि स्वामिनि मृगया केवलं गुण एव संवृत्ता । तथा हि देवः,

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णु स्वेदलेशैरभिन्नम् ।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ४ ॥

( उपेत्य ) जयतु स्वामी । गृहीतश्वापदप्रचारमरण्यम् ।

---

तैर्विशेषं संपश्यन्नाह— **दृष्टदोषेति** । दृष्टो लोके दोषो यस्या इति ॥

**अनवरतेति** । तथाहि— देव एवंविधं गात्रं बिभर्तीत्यन्वयः । अनवरतेन ज्याघातेन क्रूरा कठिना पूर्वा प्रकोष्ठो यस्य । पूर्वा प्रकोष्ठः । यथा—'उपचितकिणश्वापमौर्वीविमर्दैः पूर्वाबन्धः' इत्यन्यत्राभिहितम् । अभिन्नम् असंवृत्तम् 'भिन्नो विदीर्णे संवृत्ते' इत्यमरः । अपचितं क्षीणमेदः । व्यायतत्वात् लघुत्वादलक्ष्यम्, व्यायामगुणवत्त्वादपचयदोषयुक्तत्वेन न लक्ष्यमित्यर्थः । यदुक्तम्—'मृगयायां तु व्यायामश्लेष्मपित्तस्वेदनाशः' इति । प्राणेन बलेन सारं स्थिरम् । 'प्राणस्तु प्रणवे जीवे जीविते परमात्मनि । इन्द्रिये वायुभेदे च बलान्तर्यामिणोरपि' इति वैजयन्ती । वनगजपक्षे अनवरतधनुर्ज्यावदास्फालनेन वप्रक्रीडया क्रूरः पूर्वभागो मुखं यस्येति । अन्यत्सर्वं साधारणम् ॥

किमद्याप्यवस्थीयते ?

**राजा**— भग्नोत्साहः कृतोऽस्मि मृगयापवादिना माढव्येन ।

**सेनापतिः**— ( जनान्तिकम् ) सखे, स्थिरप्रतिबन्धो भव । अहं तावत्स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये । ( प्रकाशम् ) प्रलपत्वेष वैधेयः । ननु प्रभुरेवात्र निदर्शनम् ।

**मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः**
**सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।**

---

हृदयमजानंस्तं प्रोत्साहयति— **गृहीतेति** । प्रचरन्त्यस्मिन्निति प्रचारः, गृहीतः शोधितः श्वापदानां प्रचारः निलयस्थलं यस्मिन् तत् गृहीतश्वापदप्रचारम् । अवस्थीयते, तूष्णीमित्यर्थात् । मृगयाया अनारम्भे कारणमाह— **भग्नेति** । स्वाभिप्रायं निवेदयन्नाह— **सखे इति** । प्रतिबन्धः उपरोधः मृगयाविषयः । प्रलपत्विति । 'प्रलापोऽनर्थकं वचः' इत्यमरः; 'मूर्खवैधेयबालिशाः' इति च । अज्ञस्यास्य प्रलापो न प्रमाणम्; मृगया कर्तव्यैवेत्यर्थः । नन्विति । निदर्शनम् उदाहरणम् ॥

**मेद इति** । उत्थानम् उत्पतनम् । भयक्रोधयोर्विकृतिमदित्यन्वयः । लक्ष्यते लक्षणैर्ज्ञायते । चस्त्वर्थे । चले लक्ष्ये इषवः सिध्यन्तीति यत् स धन्विनामुत्कर्षश्च, भवतीति शेषः । यदुक्तम्— 'मृगयायां चललक्षपरिचयः, क्रोधभयस्थानेङ्गितेषु च मृगाणां

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥

**विदूषकः—** अत्तभवं कहं वि पकिदिं आपण्णो । तुमं दाव अडवीदो अडवीं आहिण्डन्तो णासालोलुवस्स कस्स वि जिण्णरिच्छस्स मुहे पडिदोसि ।

अत्रभवान्कथमपि प्रकृतिमापन्नः । त्वं तावदटवीतोऽटवीमाहिण्डमानो नासिकालोलुपस्य कस्यापि जीर्णऋक्षस्य मुखे पतितोऽसि ।

**राजा—** भद्रसेन, आश्रमसंनिकृष्टे स्थिताः स्मः । अतस्ते वचो नाभिनन्दामि । अद्य तावत्,

---

चित्तवृत्तिज्ञानम्' इति । यत एवम्, अतो मिथ्यैव मृगयां व्यसनं वदन्ति । सप्त व्यसनानि— 'स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् । महच्च दण्डपारुष्यमर्थदूषणमेव च' इति । ईदृक् एतत्सदृशः । विनुदत्यनेन कालमिति विनोदः विहारः । कुत इत्यपादानाक्षेपेण असुलभत्वमुक्तम् । यथा— 'परार्थबद्धकक्ष्याणां त्वादृशामुद्भवः कुतः' इति ॥

अत्रभवान् कथमपि प्रकृतिमापन्नः, कृच्छ्रात् निवृत्तमृगयारतिः । त्वं तावत्, मृगयासक्त इति भावः । मुखे पतितोऽसि, जीर्णऋक्षस्ते नासां भक्षयतीति भावः ॥

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥

---

एवं मृगयाया अकरणे उक्ते, कारणे चोदिते कारणान्तरमाह— **भद्रसेनेति** । भद्रसेनेति नाम्नाभिमुख्यकरणमावर्जनार्थम्; तत्पुनस्तद्वचनानभिनन्दनपारुष्यभयात् । आश्रमेति । संनिकृष्टे समीपे, आश्रमपीडाभयात् मृगयां न करोमीति फलितोऽर्थः । तदुपसंहियतां मृगयेत्याह— अद्य तावदित्यादिना । कूपादुद्धृत्य जलं यस्मिन्निधीयते, तत् निपानम् । 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः । तद्धि वने वनपालैर्मृगाणां पानार्थं क्रियते; मृगयाश्रान्तानां नरतुरगाणामुपयोगि च भवतीति प्रसिद्धिः । उक्तं चानेन— 'स्थिरतुरंगमभूमिनिपानवन्मृगवयोगवयोपचितं वनम्' इति । छायेत्यादि क्रियाविशेषणम्, तरुच्छायासु संभूयोपविश्येत्यर्थः । रोमन्थं चर्वितस्य शष्पादेः पुनश्चर्वणम् । विस्रब्धं विश्वस्तम् । मुस्ताक्षतिः मुस्तायै मुस्ताकन्दं स्वीकर्तुं क्षतिः खननम् । 'पल्वलं चाल्पसरः' इत्यमरः । शिथिलज्याबन्धम् अवरोपितज्यम् । अत्रास्मदर्थस्योचितं विश्रमलाभकर्तृत्वं धनुष्यचेतने आरोप्यमाणं चारुत्वमावहति । यदुक्तम्— 'प्रकृतमपि यत्र हित्वा कर्तृत्वं युष्मदस्मदर्थस्य । चारुत्वायान्यत्रारोप्येत गुणः स तु न दोषः' इति ।

**सेनापतिः**— यत्प्रभविष्णवे रोचते ।

**राजा**— तेन हि निवर्तय पूर्वगतान्वनग्राहिणः । यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति तथा निषेद्धव्याः । पश्य,

**शमप्रधानेषु तपोधनेषु**
**गूढं हि दाहात्मकमस्ति तेजः ।**
**स्पर्शानुकूला इव सूर्यकान्ता-**
**स्तदन्यतेजोभिभवाद्वमन्ति ॥ ७ ॥**

---

अत्र महिषादिकर्तृको निपानसलिलावगाहनादिः कार्यरूपोऽन्यथानुपपत्त्या कारणरूपं मृगयोपसंहारमाक्षिपति । अद्यैवोपसंहियतां मृगयेत्यर्थः । अत्र कार्यमुखेन कारणं प्रतीयत इति कारणस्य भङ्ग्यन्तरेणाभिधानात् पर्यायोक्तमलंकारः । 'गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम्' इति । महिषादेः शृङ्गकरणकताडनादिस्वभाववर्णनात्स्वभावोक्तिश्च ॥

स्वस्यारुचिं द्योतयन्नाह— यदिति । तत्तथेति शेषः । तेन हीति । वनग्राहिणः वनशोधकान् ॥

निषेधाकरणे प्रत्यवायमाह— शमेति । दाहो निग्रहः भस्मीकरणं च आत्मा स्वभावो यस्य । स्पर्शानुकूलाः शीतलाः । वमन्ति प्रकाशयन्ति । यथा शीतलेषु सूर्यकान्तमणिष्वन्तराग्निरस्ति, सूर्यरश्मिसंपर्कात्तं प्रकाशयन्ति च, तथा शान्तेषु तपोधनेषु ब्राह्मं

**सेनापतिः—** यदाज्ञापयति स्वामी ।

**विदूषकः—** धंसीअदु दे उच्छाहवुत्तन्तो ।

ध्वस्यतां तवोत्साहवृत्तान्तः ।

[निष्क्रान्तः सेनापतिः ।

**राजा—** (परिजनं विलोक्य) अपनयन्तु भवत्यो मृगयावेषम् । रैवतक, त्वमपि स्वं नियोगमशून्यं कुरु ।

**परिजनः—** जं देवो आणवेदि ।

यद्देव आज्ञापयति । [इति निष्क्रान्तः ।

**विदूषकः—** कदं भवदा णिम्मच्छिअं । संपदं एदस्सिं पादवच्छाआए अविरळलदाविदाणसणाथे आसणे णिसीददु भवं, जाव अहं वि सुहासीणो होमि ।

कृतं भवता निर्मक्षिकम् । सांप्रतमेतस्यां पादप-

---

तेजोऽस्ति, अन्यशक्त्यभिभवात्तत् प्रकाशयन्ति चेत्यर्थः । अत्राप्रस्तुतात्सामान्यात् प्रस्तुतो विशेषः प्रतीयते । यदि सैनिकाः आश्रमपीडां कुर्युः, तर्हि काश्यपोऽस्मान् शपेदित्यर्थः । उपमाप्रस्तुतप्रशंसयोः संसृष्टिरियम् ॥

सेनापतिमाह— ध्वस्यतां तवोत्साहवृत्तान्तः । परिजनं यवनिकाः । नियुज्यतेऽस्मिन्निति नियोगो द्वारम् । मक्षिकाणामभावो निर्मक्षिकम् । अर्थाभावेऽव्ययीभावः । विविक्तमित्यर्थः ॥

च्छायायामविरललतावितानसनाथे आसने निषीदतु भवान्, यावदहमपि सुखासीनो भवामि ।

**राजा**— गच्छाग्रतः ।

**विदूषकः**— एदु एदु भवं ।

एतु एतु भवान् ।

( इत्युभौ परिक्रम्योपविष्टौ । )

**राजा**— माढव्य, अनवाप्तचक्षुःफलोऽसि, येन त्वया दर्शनीयं न दृष्टम् ।

**विदूषकः**— णं भवं अग्गदो मे वट्टदि ।

ननु भवानग्रतो मे वर्तते ।

---

एवं समाप्य मृगयां विनिवारितसैनिकाश्रमविमर्दः । अपसारितपरिवारो राजा सख्या सहासीनः ॥ निर्व्यापारो दयितां ध्यायन्नुत्कण्ठितस्तदुपशान्त्यै । वर्णयितुमुपक्रमते तस्याः संदर्शनादीनि ॥ यदुक्तमनेनैव— 'कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः । मनसिजरुजं सा वा दिव्या ममालमपोहितुं रहसि लघयेदारब्धा वा तदाश्रयिणी कथा' इति । **माढव्येति** । येनेति यस्मादर्थेऽव्ययम् । अत्राप्रस्तुताद्वैधर्म्येण प्रस्तुतोऽर्थः प्रतीयते । माढव्य मया दर्शनीयं दृष्टम्; अतोऽहमवाप्तचक्षुःफलोऽस्मीत्यर्थः । तदारम्भाननुगुणो विकृतमाह— ननु भवानग्रतो मे वर्तते, भवतो दर्शनीयं सुलभमित्यर्थः; अग्रतो वर्तते

**राजा**— सर्वः कान्तमात्मानं पश्यति । तामाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

**विदूषकः**— (स्वगतम्) होदु । ण से अवसरं दाइस्सं । (प्रकाशम्) भो वअस्स, अज्ज दे तावसकण्णआ किं अब्भत्थणीआ दीसदि ।

भवतु । नास्यावसरं दास्यामि । भो वयस्य, अद्य ते तापसकन्यका किमभ्यर्थनीया दृश्यते ।

**राजा**— सखे, न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते ।

---

परस्परमाभिमुख्यात् । एवमात्मनि दर्शनीयत्वारोपो विक्रमोर्वशीयेऽपि दृश्यते— 'किं वा तत्तहोदी उव्वसी अहं विअ सुरूपा, आदु अब्भहिआ रूपेण' इति । दर्शनीयत्वमारोपितमिति जानन्नाह— सर्वः कान्तं कमनीयमात्मानं पश्यति मन्यते ; तव दर्शनीयंमन्यत्वे न दोष इति भावः । आरब्धे त्वरमाणस्तच्छेषमाह— तामिति । अनुभूतार्थविषयस्तच्छब्दः । ललामः अलंकारः । 'ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे । श्रेष्ठे भूषापुण्ड्रशृङ्गपुच्छचिह्नाश्वलिङ्गिषु' इति यादवः । अस्य आरब्धस्य शकुन्तलावर्णनस्य । वर्णक्रमेण तस्या अगम्यत्वमाह— अद्य दृश्यत इति । अदृष्टपूर्वमेवंविधमिति भावः । सा गम्यैवेत्याह— **न परिहार्य इति** । अत्र सामान्याद्विशेषः प्रतीयते । पूरुवंशजातस्य मे मनोऽननुरूपां नाभिलषतीत्यर्थः ॥

सुरयुवतिसंभवं किल
मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं
च्युतमिव वनमालिकाकुसुमम् ॥ ८ ॥

**विदूषकः**— (विहस्य) जह कस्स वि पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिणीफळाहिळासो भवे, तह इत्थिआरअणपरिभाविणो भवदो इअं अब्भत्थणा ।

यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्त्रिण्याम-भिलाषो भवेत्, तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना ।

---

मुनिकन्यकायाः कथं गम्यत्वमित्याह— **सुरयुवतिसंभवं किल मुनेरपत्यमिति** । तर्हि कथं मुन्यपत्यत्वमित्याह— तदुज्झिताधिगतमिति । मुनिसंपर्केण न गम्यत्वहानिरित्याह— अर्कस्येति । शिथिलं वृन्तश्लथम् ॥

एवमगम्यत्वे वर्णक्रममूले परिहृते, पुनः सांसर्गिकदौर्भाग्यमूलमगम्यत्वमस्तीत्याह— यथा कस्यापि पिण्डखर्जूरैः अतिमधुरद्रव्यविशेषैः । तेषामुद्वेजकत्वं रसनाजाड्यकारित्वात् । तिन्त्रिणीफलेऽभिलाषः तस्याम्लत्वान्माधुर्यकृतरसनाजाड्यनिराकरिष्णुत्वात् । स्त्रीरत्नानि परिभवितुमतिपरिचयादवज्ञातुं शीलवतः । सा प्रत्युत दर्शनी-

**राजा**— न तावदेनां पश्यसि, येनैवमवादीः ।

**विदूषकः**— तं खु रमणिज्जं एव्व, जं भवदो वि विम्हअं उप्पादेदि ।

तत्खलु रमणीयमेव, यद्भवतोऽपि विस्मयमुत्पादयति ।

**राजा**— वयस्य, किं बहुना,

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।

---

यैवेत्याह— **न तावदिति** । पश्यसीति वर्तमाननिर्देशः स्ववैधर्म्य-दृष्ट्या । स्वयं हि संकल्पपुरोवर्तिनीं सदा पश्यति ; तदनुगुणम्— एनामित्येतत् । अथ व्यावर्तयितुमसमर्थस्तमनुसरति— तत्खलु रमणीयमेव । अत्र सामान्यात्प्रस्तुतो विशेषः प्रतीयते । सा रमणी-यैवेति तर्कयामि, यत्ते विस्मयं समुत्पादयतीत्यर्थः ॥

स्वयमनुभूतं वयस्येनानुमितं तस्या रमणीयत्वं वर्णयति— **किं बहुना** । प्रत्यवयवं न वर्णयामि, आकृतिमेव संक्षेपेण वर्णया-मीति भावः । **चित्र इति** । चित्रे चित्रफलके । परिकल्पितः सत्त्वेन चैतन्येन योगः संबन्धो यस्याः । रूपस्य सौन्दर्यस्य उच्च-येन समाहारेण, उच्चितेन रूपेणेत्यर्थः । नु-शब्दः पूर्ववाक्येऽपि योज्यः । चित्रे ह्यालिख्यमानं यद्यत् सम्यक् नायाति, तत्तत् प्रयत्नेन समीचीनं क्रियते, यद्वक्ष्यति— 'यद्यत्साधु न चित्रे

स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ९ ॥

**विदूषकः**— जइ एव्वं पच्चादेसो दाणिं रूपवदीणं ।
यद्येवं प्रत्यादेश इदानीं रूपवतीनाम् ।

---

स्यात्क्रियते तत्तदन्यथा' इति । सा पौनःपुन्येनोत्कर्षं चिकीर्षुणा विधिना अम्बुवाहालिमालेन्दुरेखेन्दीवरादिभ्यः सकलं सौन्दर्यं समाहृत्य चित्रे यथास्थानं विन्यस्य परिकल्पितसत्त्वयोगा नु । यदि वा मनसा चिकीर्षितं सर्वं हस्ते सम्यङ्नायातीति मनसा कृता नु । धातुः विभुत्वम् अपरिच्छेद्यं सृष्टिकौशलम्, तस्याः लोकातिक्रान्तरामणीयकं वपुश्चानुचिन्त्य, सा, अपरा एवंविधास्वन्यतरा सामान्यस्त्रीरत्नसृष्टिव्यतिरिक्ता स्त्रीरत्नसृष्टिरिति मे प्रतिभाति । स्त्रीरत्नमयी सृष्टिः स्त्रीरत्नसृष्टिः । सृज्यत इति सृष्टिः स्त्रीरत्नमयसृज्यभूतेत्यर्थः । अत्र पूर्वार्धे संदेहद्वयम्, उत्तरार्धे अतिशयोक्तिरिति संसृष्टिः । 'स संदेहस्तु भेदोक्तौ तदनुक्तौ च संशयः' इति । 'निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् । प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥ कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः । विज्ञेयातिशयोक्तिः सा' इति ॥

**जइ इति** । दाणिं इति वाक्यालंकारे । रूपवतीनां प्रत्यादेशः, कारणे कार्योपचारः, निन्दाकारणमित्यर्थः । 'प्रत्यादेशो निराकृतिः' इत्यमरः ॥

**राजा**— इदं च मे मनसि वर्तते ।

**अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-**
**रनामुक्तं रत्नं मधु नवमनास्वादितरसम् ।**

---

पुनरपि सृष्टेः प्रकारमाह— **इदमिति** । इदं वक्ष्यमाणम् । मनसि वर्तते, प्रतिभाति । **अनाघ्रातम्** अनुपभुक्तसौरभम् । कररुहैरलूनम्, लवनं तावतैवानुपयोगात्कर्णपूरीकरणाद्युपयोगितया परिणमति, अनुपयुक्तमित्यर्थः । अनामुक्तम् आमोचनमाभरणत्वेन धारणं तद्रहितम् । मधु माक्षिकम् । नवम् अपर्युषितम् । अनास्वादितरसं न केनचिदास्वादितावशिष्टम् । अखण्डम् अन्तरान्तरोपभोगाभावादपरिक्षीणं परिपूर्णम् । पुण्यानाम् अनेकजन्मार्जितानां शुभकर्मणाम् । फलं कामसुखं शृङ्गारापरपर्यायम् । अपि चेति समुच्चये । तद्रूपं तस्या रूपं वपुः । अनघं निर्दोषम् । अत्रानघत्वविशिष्टे तद्रूपे एकस्मिन्ननाघ्रातत्वादिविशिष्टानि पुष्पादीनि बहून्यारोप्यन्ते इति मालारूपकमेतत् । अत्र 'चित्रे' इत्यादि 'विधिः' इत्यन्तं विधिकर्तृकसृष्टिप्रधानप्रकरणम् । अतः प्रकरणवैशिष्ट्यात् पुष्पादीनां तद्रूपसृष्टेरुपादानकारणत्वं प्रतीयते । अतोऽयमर्थः— अनघं तद्रूपं विधिना अनाघ्रातेन पुष्पेण, कररुहैरलूनेन किसलयेन, अनामुक्तेन रत्नेन, नवेनानास्वादितरसेन मधुना, अखण्डेन पुण्यानां फलेन च, निर्मितमिति च मे प्रतिभातीति । अतिशयोक्तिरियम्, पुष्पादीनां तत्सृष्टेरुपादानकारणत्वासंबन्धे संबन्धकथनात् । अतोऽत्र मालारूपकेणातिशयोक्तिर्ध्वन्यते । तया पुनस्तद्रूपस्य सहजसौरभसौकुमार्यलावण्यमाधुर्याह्लादक-

अखण्डं पुण्यानां फलमपि च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥

**विदूषकः**— तेण हि लहु परित्ताअदु णं भवं । मा कस्स वि तवस्सिणो इङ्गुदीतेल्लमिस्सचिक्कणसीसस्स आरण्णअस्स हत्थे णिपडेदु ।

तेन हि लघु परित्रायतामेनां भवान् । मा कस्यापि तपस्विन इङ्गुदीतैलमिश्रचिक्कणशीर्षस्य आरण्यकस्य हस्ते निपततु ।

---

त्वादीनि व्यज्यन्ते । तेन माधुर्यस्य अधररसवागिन्द्रियनिष्ठत्वान्मनः-षष्ठेन्द्रियवर्गसातिशयसंतर्पणत्वम्;' तेनोपभोगयोग्यतायां परकाष्ठा-प्राप्तिश्च । एवमुपभोगयोग्यतामुक्त्वा तदनुरूपः कोऽपि नेत्याह— न जान इति । इह एतद्विषये । समुपस्थास्यतीति अन्तर्भावितण्यर्थः 'अनुष्ठितानन्तरजाविवाहः' इतिवत् । सम्यक् समीपे स्थापयिष्यतीत्यर्थः । अनेन स्वाधीनभर्तृकात्वं व्यज्यते । एवं तद्रूपमुपभोगयोग्यतायाः परकाष्ठां प्रापयन् विधिरिह कं भोक्तारं समुपस्थास्यतीति न जाने । न जान इति ग्राम्यत्वपरिहाराय; तद्रूपोपभोगानुरूपः कोऽपि नेत्यर्थः ॥

लघु शीघ्रम् । भयहेतुमाह— मा कस्यापि तपस्विनः विषयविमुखस्य । इङ्गुदीतैलमिश्रचिक्कणशीर्षस्य दुर्भगस्य । 'चिक्कणं

**राजा**— परवती खलु तत्रभवती । न च संनिहितोऽत्र गुरुजनः ।

**विदूषकः**— अह तत्तभवन्तं अन्तरेण कीरिसो से दिट्ठिराओ ।

अथ तत्रभवन्तमन्तरेण कीदृशस्तस्या दृष्टिरागः ।

**राजा**— निसर्गादेवाप्रगल्भस्तपस्विकन्याजनः । तथापि तु

**अभिमुखे मयि संहृतमीक्षितं**
**हसितमन्यनिमित्तकृतोदयम् ।**

---

मचनोपमम्' इत्यमरः । आरण्यकस्य अलोकवृत्तज्ञस्य । हस्ते निपततु, ततः पूर्वमेव स्वीकुरुष्वेति भावः । तत्रोपरोधमाह— परवती गुर्वधीना । 'परच्छन्दः पराधीनः परवान्परतन्त्रकः' इति । अथ समागमस्य कालविलम्बमाशङ्क्य, आश्वासोपायमन्विच्छंस्तत्प्रधानभूतं तदनुरागं पृच्छति— **अथेति** । प्रश्ने । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । कीदृशः, अस्ति वा न वेत्यर्थः । दृष्टिरागः दृष्टौ रागः रञ्जनम् अनुरागानुभावभूतम् । निसर्गादिति । अत्राप्रागल्भ्यात्कारणात् दृष्टावनुरागाविष्करणं कार्यं प्रतीयते, तपस्विकन्यासामान्यात्तद्विशेषश्च । सा दृष्टावनुरागं न प्रकाशितवतीत्यर्थः ॥

**तथेति** । तथापि, विशेषोऽस्ति । तमाह— **अभिमुख इति** । मयि अभिमुखे वदनकमलमवलोकयति सति । तया ईक्षितं मद्विषय-

विनयवारितवृत्तिरितस्तया
न विवृतो मदनो न च संवृतः ॥ ११ ॥

**विदूषकः**— किं णु खु सा दिट्ठमेत्तस्स तुह अङ्कं आरोहदि ।
किं नु खलु सा दृष्टमात्रस्य तवाङ्कमारोहति ।

**राजा**— मिथः प्रस्थाने पुनः शालीनयापि तया काममाविष्कृतो भावस्तत्रभवत्या । तथा हि—

---

कमवलोकनम् । संहृतं निवर्तितम् । अनुरागानुभावोऽयम् । तया, अन्यनिमित्तकृतोदयं हसितम् अहासि च । अन्यनिमित्तेत्यनेन हासस्य गूहनमुक्तम् । गूढहासोऽप्यनुरागानुभावः । यदुक्तं मुनिना रागिणीलक्षणे— 'स्मयते च निगूढं च वाक्यं चाधोमुखी वदेत्' इति । मदनः कामः, अनुराग इति यावत् । विनयवारितवृत्तित्वं विवरणाभावे, ईक्षणसंहारो गूढहासश्च संवरणाभावे, हेतुः ॥

अनुरागस्य सम्यगनाविष्करणं त्वय्यविश्वासादित्याह— **किं नु खलु सा** । दृष्टमात्रस्य तत्पूर्वदृष्टस्य । अत्राङ्कारोहात्कार्यात् कारणरूपो विश्वासः प्रतीयते । किमपरिचितं त्वां विश्वसितीत्यर्थः ; तव हृदयाज्ञानात्सा स्वहृदयमनाविष्कृतवतीति भावः ॥

सत्यं मयि परिचिते तयानुरागः सम्यगाविष्कृत इत्याह— **मिथ इति** । मिथः रहसि ; उपविश्येत्यर्थात् । शालीनया लज्जितया । 'शालीनो लज्जितो मतः' इति । रहसि कंचित्कालं सहोपविश्ये-

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १२ ॥

**विदूषकः**— जइ एव्वं, गहीदपाहेओ होसि । किदं तुए अणुपसग्गं तवोवणं त्ति पेक्खामि ।

यद्येवम्, गृहीतपाथेयो भवसि । कृतं त्वयानुपसर्गं तपोवनमिति पश्यामि ।

---

ङ्गिताकारादिभिर्विदितमदनुरागा पर्णशालां यान्ती सा मद्विषयमनुरागं सम्यगाविष्कृतवतीत्यर्थः ॥

भावाविष्करणप्रकारमाह— **दर्भेति** । इति, उक्त्वेति शेषः । अकाण्डे अनवकाशे; अदर्भे पथि । विवृत्तवदना वदनविवर्तनं तावतैवानुपयोगात् अवलोकनरूपेण परिणमति— विवृत्तवदनावलोकितवतीति । वक्ष्यति च— 'दृष्टो विवृत्य बहुशोऽप्यनया सतृष्णम्' इति ॥

**यद्येवं गृहीतपाथेयो भवसि**; पाथेयशब्देनाश्वाससाधनविशेषवाचिना तत्सामान्यं लक्ष्यते; गृहीताश्वाससाधन इत्यर्थः। उक्तं च— 'मनस्तु तद्भावदर्शनाश्वासि' इति । कृतं त्वयानुपसर्गं तपोवनमिति पश्यामि । अत्र तपोवनानुपद्रवकरणात्कार्यात्तत्र निवासः कारण-

**राजा**— सखे, तपस्विभिः कैश्चित्परिज्ञातोऽस्मि । चिन्तय तावत्केनापदेशेन सकृदप्याश्रमे वसामः ।

**विदूषकः**— को अवरो अवदेसो । णं तुमं राआ । णीवारचट्ठभाअं मे उवहरन्तु त्ति ।

कोऽपरोऽपदेशः । ननु त्वं राजा । नीवारषष्ठभागं मे उपहरन्त्विति ।

**राजा**— मूढ, अन्यद्भागधेयमेतेषां रक्षणे निपतति, यद्रत्नराशीनपि विहायाभिनन्द्यम् । पश्य ।

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १३ ॥

---

रूपः प्रतीयते ; यावद्दुर्वांगमनमाश्रमे निवत्स्यसीति तर्कयामीत्यर्थः । तत्रोपरोधमाह— तपस्विभिरिति । राज्ञो वृथाश्रमवासोऽनुचितः ; अत आह— केनेति । सकृदपि, सोऽपि महान् लाभ इति भावः । कोऽपरोऽपदेशः । त्वं राजा इत्यनेन षड्भागार्हत्वमुक्तम् । 'राजा हि फलषड्भागं तस्मादाप्नोति रक्षितात्' इति स्मृतेः । मूढ विशेषानभिज्ञ । अन्यत् भागधेयम् अन्यो भागः निपतति स्वयमेवायाति । यथा श्रीभागवते— 'इष्टं ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् । तदा स्वभागधेयानि ग्रहीष्यन्ति दिवौकसः' इति । तस्य फलषड्भागादाधिक्यमाह— यद्रत्नेति ॥

(नेपथ्ये)

हन्त, सिद्धार्थौ स्वः ।

**राजा**— (कर्णं दत्त्वा) अये, धीरप्रशान्तः स्वरः । तपस्विभिर्भवितव्यम् ।

(प्रविश्य)

**दौवारिकः**— जेदु भट्टा । एदे दुवे इसिकुमारआ पडिहारभूमिं उवट्ठिदा ।

जयतु भर्ता । एतौ द्वौ ऋषिकुमारौ प्रतिहारभूमिमुपस्थितौ ।

**राजा**— तेन ह्यविलम्बितं प्रवेशय तौ ।

**दौवारिकः**— एसो पवेसेमि । (इति निष्क्रम्य ऋषिकुमाराभ्यां सह प्रविश्य) इदो इदो भवन्ता ।

एष प्रवेशयामि । इत इतो भवन्तौ ।

(उभौ राजानं विलोकयतः ।)

---

तद्धेतुं तस्य निकर्षमाह— **यदुत्तिष्ठतीति** । अन्यस्य भागस्य स्वरूपमुत्कर्षं चाह— तप इति । अक्षय्यं क्षयरहितम् ॥

अथ राजानमासन्नं श्रुत्वा तद्दर्शनोत्सुकौ । तस्मिन्गुरुभिरादिष्टौ ब्रूतः प्रीतौ कुमारकौ— **हन्तेति** । धीरप्रशान्तः धैर्यप्रशमद्योतकः ।

**प्रथमः**— अहो दीप्तिमतोऽपि विश्वसनीयताऽस्य वपुषः ।
अथवोपपन्नमेतदृषिभ्यो नातिभिन्ने राजनि । कुतः?

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वंद्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥

**द्वितीयः**— गौतम, अयं स बलभित्सखो दुष्यन्तः ।

**प्रथमः**— अथ किम् ।

**द्वितीयः**— तेन हि,

---

अहो इति । अत्राधृष्यत्वाभिगम्यत्वे व्यज्येते । अथवेति । नात्र विस्मय इत्यर्थः । कुत इत्याह— उपपन्नमिति । नातिभिन्ने अनुत्कटभेदे ॥

उक्तमुपपादयति— अध्याक्रान्तेति । सर्वभोग्ये सर्वैराश्रमिभिर्भोग्ये गृहस्थाश्रमे ; 'यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः । वर्तन्ते गृहिणं तद्वदाश्रित्येतर आश्रमाः' इति वचनात् । रक्षायोगात् रक्षाविषयादुद्योगात् ; यदुक्तम्— 'तपःषड्भागमक्षय्यम्' इति । केवलमिति । नाम्नो राजपूर्वत्वमेव भेद इत्यर्थः ॥

दिवि चारणगीतकीर्तित्वमाकर्ण्याह— अयं स इति । काक्वा

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते सुरयुवतयो बद्धवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥

**उभौ**— (उपगम्य) विजयस्व राजन् ।

**राजा**— (आसनादुत्थाय) अभिवादये भवन्तौ ।

**उभौ**— स्वस्ति भवते । [इति फलान्युपहरतः ।

**राजा**— (सप्रणामं परिगृह्य) आज्ञापयितुमिच्छामि ।

**उभौ**— विदितो भवानाश्रमसदामिहस्थः । तेन भवन्तं प्रार्थयन्ते ।

**राजा**— किमाज्ञापयन्ति ?

**उभौ**— तत्रभवतः कण्वस्य महर्षेरसांनिध्याद्रक्षांसि न इष्टिविघ्नमुत्पादयन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

---

प्रश्नः । नैतदिति । उदधिभिः श्यामा सीमा पर्यन्तो यस्याः, समुद्रपर्यन्ताम् । परिघ आयुधविशेषः । भुनक्ति रक्षति । कुत एतन्न चित्रमित्याह— आशंसन्त इति । सक्तवैराः परिभूता इत्यर्थः । अत्र वज्रधनुषोः पुरुहूतनायकयोश्चोपमानोपमेयभावः प्रतीयते ॥

**राजा**— अनुगृहीतोऽस्मि ।

**विदूषकः**— (अपवार्य) एसा दाणिं ते अणुऊळदरा अब्भत्थणा ।

एषेदानीं ते अनुकूलतराभ्यर्थना ।

**राजा**— (स्मितं कृत्वा) रैवतक, मद्वचनादुच्यतां सारथिः सबाणासनं रथमुपस्थापयेति ।

**दौवारिकः**— जं देवो आणवेदि ।

यद्देव आज्ञापयति । [इति निष्क्रान्तः ।

**उभौ**— (सहर्षम्)

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ॥

**राजा**— (सप्रणामम्) गच्छतां पुरो भवन्तौ । अहमप्यनुपदमागत एव ।

**उभौ**— विजयस्व ।

[इति निष्क्रान्तौ ।

---

अनुकूलतराभ्यर्थना, आश्रमवासोपायभूतत्वात् ॥

अनुकारिणीति । अनुकारिणि सदृशे । इदम् अस्मदिष्टिविघ्नविनिवारणम् । उक्तं सामान्येनोपपादयति— आपन्नेति । आगत इत्यविलम्ब उक्तः ॥

**राजा**— माढव्य, अस्ति शकुन्तलादर्शने कुतूहलम्?

**विदूषकः**— पढमं सपरिवाहं आसि। दाणिं रक्खसवुत्तन्तेण इमस्स बिन्दू वि णावसिट्ठो।

प्रथमं सपरिवाहमासीत्। इदानीं राक्षसवृत्तान्तेन अस्य बिन्दुरपि नावशिष्टः।

**राजा**— ननु मत्समीपे वर्तिष्यसे।

**विदूषकः**— एस रक्खसादो रक्खिदो म्हि।

एष राक्षसाद्रक्षितोऽस्मि।

(प्रविश्य)

**दौवारिकः**— देव सज्जो रधो भट्टिणो विजअप्पत्थाणं अवेक्खदि। एस उण णअरादो देवीणं आणत्तिहारओ करभओ आअदो।

देव, सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षते। एष पुनर्नगराद्देवीनामाज्ञप्तिहारकः करभक आगतः।

---

अस्तीत्यत्र काक्वा प्रश्नः। सपरिवाहमासीत्, कौतुकमित्यर्थात्। परीवाहः जलस्याभिवृद्धिः। बिन्दुः तस्य लेशः। ताभ्यां तत्सामान्यं लक्ष्यते। प्रथममभिवृद्धमिदानीं तस्य लेशोऽपि नेत्यर्थः। न भेतव्यमिति कारणमुखेनाह— नन्विति। आज्ञप्तिः आज्ञा;

**राजा**— (सादरम्) किमज्जूभिः प्रेषितः ?

**दौवारिकः**— अह इं।

अथ किम्।

**राजा**— ननु प्रवेश्यताम्।

**दौवारिकः**— तह (इति निष्क्रम्य करभकेण सह प्रविश्य) एसो भट्टा। उवसप्पदु अज्जो।

तथा। एष भर्ता। उपसर्पत्वार्यः।

**करभकः**— जेदु भट्टा। देवी आणवेदि— आआमिणि चउत्थे दिअहे णिउत्थपारणो मे उववासो भविस्सदि। तहिं दीहाउणा अवस्सं संभाविदव्वं त्ति।

जयतु भर्ता। देव्याज्ञापयति— आगामिनि चतुर्थे दिवसे निर्वृत्तपारणो मे उपवासो भविष्यति; तत्र दीर्घायुषावश्यं संभावयितव्यमिति।

**राजा**— इतस्तपस्विकार्यम्, इतो गुरुजनाज्ञा। द्वयमप्यनतिक्रमणीयम्। किमत्र प्रतिविधेयम् ?

---

हारकः आनेता। अज्जूभिः मातृभिः। संभावितव्यमिति। संभावना सत्कारः। इतः तपोवने, इतः नगरे। आज्ञा आज्ञप्तं कार्यम्। अत्र कार्ययोः समप्राधान्यं युगपत्कर्तुमशक्यत्वं च व्यज्यते। अतः

**विदूषकः**— तिसङ्कू विअ अन्तरा चिट्ठ ।

त्रिशङ्कुरिवान्तरा तिष्ठ ।

**राजा**— सत्यमित्थमाकुलीभूतोऽस्मि ।

**कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।**
**पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ॥**

(विचिन्त्य) सखे त्वमम्बया पुत्र इति प्रतिगृहीतः । अतो भवानितः प्रतिनिवृत्त्य तपस्विकार्यव्यग्रमानसं मामावेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति ।

**विदूषकः**— ण क्खु मं रक्खोभीरुअं गणेसि ।

न खलु मां रक्षोभीरुं गणयसि ?

**राजा**— (सस्मितम्) कथमेतद्भवति संभाव्यते ।

---

प्रतिपत्तिमूढ आह— किमत्रेति । सत्यमित्थमाकुलीभूतोऽस्मि ; तदुपायश्चिन्त्यतामिति भावः ॥

**कृत्ययोरिति** । द्वैधीभवति, उभयोः कृत्ययोरपि युगपत्कर्तव्यत्वबुद्धिर्जायत इत्यर्थः ॥

विचिन्त्यावधृतमाह— **सखे इति** । न खलु मां रक्षोभीरुं गणयसि । अत्र काक्वा प्रश्नः । नेत्याह— कथमिति । तथा प्रस्थापयामी-

**विदूषकः**— तेण हि जह राआणुएण गन्तव्वं तह गच्छामि ।

तेन हि यथा राजानुजेन गन्तव्यं तथा गच्छामि ।

**राजा**— ननु तपोवनोपरोधः परिहरणीय इति सर्वानानुयात्रिकांस्त्वयैव सह प्रस्थापयामि ।

**विदूषकः**— जुवराओ म्हि दाणिं संवुत्तो ।

युवराजोऽस्मीदानीं संवृत्तः ।

**राजा**— (आत्मगतम्) चपलोऽयं वटुः । कदाचिदिमामस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत् । भवतु । एनमेवं वक्ष्ये । (विदूषकं हस्ते गृहीत्वा; प्रकाशम्) वयस्य ऋषिगौरवादाश्रमं गच्छामि । न खलु सत्यमेव तापसकन्यकायां ममाभिलाषः । पश्य,

---

त्याह— तपोवनेति । तद्विसर्जने कमपि दोषमाशङ्क्य परिहरति— चपलोऽयमित्यादिना वच इत्यन्तेन । इमां शकुन्तलाविषयाम् । हस्तग्रहणं विस्रम्भार्थम् । ऋषिगौरवात्, न शकुन्तलादिदृक्षया । न खल्विति । शकुन्तलायामभिलाषोऽस्तीत्येतत् न सत्यमेवेत्यर्थः । न खलु सत्यमेव असत्यमेतन्मम वचनमित्यन्तर्गतः । अतोऽसत्यवादित्वपरिहारः ॥

क्व वयं क्व परोक्षमन्मथो
मृगशावैः सममेधितो जनः ।
परिहासविजल्पितं सखे
परमार्थेन न गृह्यतां वचः ॥ १९ ॥

**विदूषकः**— अह इं । अथ किम् ।

[ निष्क्रान्ताः सर्वे ।

## इति द्वितीयोऽङ्कः ॥

---

अभिलाषस्यात्यन्तासंभावनामाह— **क्वेति** । वयं स्वतः संसर्गाच्च मदनतन्त्रप्रवीणाः । जनविशेषणाभ्यां तदन्यथात्वं व्यज्यते । क्वेत्यधिकरणाक्षेपे ; स चोभयत्रोपात्त उभयोरैकाधिकरण्यमाक्षिपति ; उभयमेकस्मिन्नभिलाषे कर्तृतया कर्मतया च नान्वयि । अहं हि सत्यवादी ; अतः परमार्थमेतदिति मा मंस्था इत्याह— परिहासेति । परिहासे पुनरसत्यमनिषिद्धम् ; 'न नर्मयुक्तं ह्यनृतं हिनास्ति' इत्युक्तेः, 'न वितथा परिहासकथास्वपि' इति च । अथ किम् , एतत् परमार्थमिति नावगच्छामीत्यर्थः ॥

इति अभिरामविरचिते अभिज्ञानशाकुन्तलदिङ्मात्रदर्शने
द्वितीयोऽङ्कः ॥



# तृतीयोऽङ्कः ॥



( ततः प्रविशति यजमनशिष्यः । )

**शिष्यः—** ( कुशानादाय ) अहो महाप्रभावः पार्थिवो दुष्यन्तः । यत्प्रविष्टमात्र एवाश्रमं तत्रभवति राजनि निरुपप्लवानि नः कर्माणि संवृत्तानि ।

**का कथा बाणसंधाने ज्याशब्देनैव दूरतः ।**
**हुंकारेणेव धनुषः स हि विघ्नानपोहति ॥ १ ॥**

---

इति मुन्यर्थनहेतुकधर्मारण्यप्रवेशमवनिपतेः ।
संदर्श्य मखविरोधिप्रध्वंसादीनि सूच्यन्ते ॥

तत इति । कुशान् दर्भान् । 'कुशः पुनः, अस्त्री दर्भे रामसुते ना' इति केशवः । अथ यजमाननियोगाद्दर्भानादाय यज्ञशालां ताम् । गच्छन् शिष्यो राज्ञः प्रभावमनुचिन्त्य विस्मितः प्राह— अहो इति अनुभावः । अनभिभवनीयताप्रतिपत्तिहेतुः प्रभावः । कुत इत्याह— प्रविष्टमात्रे प्रवेशसमय एव ॥

कथमेतदित्याह— का कथेति । कथा कथनं प्रसङ्गः । विघ्नान् तत्कारणानि रक्षांसि । धनुषो हुंकारेणेवेत्यन्वयः । ज्याशब्दग-

यावदिमान्वेदिसंस्तरणार्थं दर्भानृत्विग्भ्य उपहरामि । ( परिक्रम्यावलोक्य च; आकाशे ) प्रियंवदे, कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि नीयन्ते । ( श्रुतिमभिनीय ) किं ब्रवीषि? आतपलङ्घनाद्बलवदस्वस्था शकुन्तला; तस्याः शरीरनिर्वापणायेति? तर्हि यत्नादुपगम्यताम् । सा खलु भगवतः कुलपतेरुच्छ्वसितम् । अहमपि वैतानिकं शान्त्युदकमस्यै गौतमीहस्ते विसर्जयिष्यामि । [ निष्क्रान्तः ।

## विष्कम्भकः ।

---

त्वेन धनुषो हुंकार उत्प्रेक्ष्यते । विघ्नदूरीकरणं निमित्तम्; तच्च मुनेर्हुंकारस्यैव संभवति; अत उत्प्रेक्षा धनुषि मुनिव्यवहारसमारोपाश्रयां समासोक्तिं गर्भीकरोति— धनुषो मुनेः हुंकारेणेवेत्यर्थः ॥

प्रकृतमाह— **यावदिति** । वेदिः शालामध्यम् । आकाशे, 'किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषितम्' इति । प्रियंवदे इति । उशीरं लामज्जकम् । मृणालवन्तीति सप्तम्यर्थे । आतपो ग्रीष्मः, तस्य लङ्घनात् प्राप्तेः । यथा— 'प्रांशुलङ्घ्ये फले लोभात्' इति । उपगम्यतां त्वरितमुपगम्य निवार्यताम् । कुत इत्याह— सा खल्विति । उच्छ्वसितं प्राणाः । अहमपि सहकरिष्यामीत्याह— अहमपीति । वितानं यज्ञः । तत्र भवं वैतानिकम् । शान्त्यर्थमुदकं शान्त्युदकम् ॥

( ततः प्रविशति कामयमानावस्थो राजा । )

**राजा**— ( सचिन्तं निःश्वस्य )

जाने तपसो वीर्यं
सा बाला परवतीति मे विदितम् ।

---

**विष्कम्भकः**— 'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । विष्कम्भस्तु स विज्ञेयो मध्यपात्रप्रयोजितः ' इति । विघ्ननिरासो राज्ञः संतापः कामहेतुकस्तस्याः । शिशिरोपचारकरणं सखीकृतं मालिनी-तीरे ॥ वृत्तः कथैकदेशो गौतम्यास्तत्र सायमागमनम् । वर्तिष्यमाण एतौ विष्कम्भे ह्यत्र सूच्येते ॥ अथ काष्ठागतान्योन्यरागयोरसमेतयोः । प्रदर्श्यते नायकयोर्मदनातुरयोर्दशा— **तत इति** । 'अवस्थातुः पदार्थस्य विकारेषु क्रियागुणैः । रूपैस्तैस्तैरवस्थानमवस्था नाम गीयते ' इत्यवस्थालक्षणम् ॥

एवमाश्रममासाद्य मखविघ्नकरान्खलान् । प्रभावेन निराकुर्वन्दूरे राजा कदाचन ॥ प्रातःसवनेऽतीते तपस्विभिर्विश्रमार्थमादिष्टः । दयितामेव ध्यायन्सोत्कण्ठः प्राह— **जान इति** । अत्र तपोवीर्यज्ञानात्कारणादप्रस्तुतात् बलात्स्वीकाराशक्यत्वं कार्यं प्रकृतं प्रतीयते ; तथा तस्याः परवतीत्वात्कारणात् कार्यभूतस्तदनुमत्या स्वीकाराभावश्च । अतोऽयमर्थः— मुनिशापभयात् तस्या बलात्स्वीकारो अशक्यः, तस्या गुर्वधीनत्वात्तदनुमत्या स्वीकारो न संभवतीति जाने ; तथापि धैर्यमवलम्ब्य गुर्वागमनप्रतीक्षणे कर्तव्ये सति इदं हृदयं तस्याः

अलमस्मि ततो हृदयं

तथापि नेदं निवर्तयितुम् ॥ २ ॥

( मदनबाधां निरूपयन् ) भगवन्कुसुमायुध, त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामिजनसार्थः । कुतः ?

---

शकुन्तलाया निवर्तयितुं नालमस्मि न समर्थोऽस्मीति । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इति वैजयन्ती । अप्रस्तुतप्रशंसात्रालंकारः ॥

**मदनेति** । मदनशरपीडामभिनीय पीडामसहमानः शरपातानुमितपुरोऽवस्थानं मदनं सबहुमानमभिमुखीकृत्य बाधानिवृत्तिं प्रार्थयते— **भगवन्निति** । भगवन्निति माहात्म्यमभिदधता अतिसंध्ययोग्यता व्यज्यते; कुसुमायुधेत्यनेन परपीडावैमुख्यम्; चन्द्रमसेत्यनेन आह्लादकत्वमभिदधता परोपकारपरत्वं च; अत आह— विश्वसनीयाभ्यामिति । विश्वसनीयत्वेन कामिजनसार्थस्य तयोरुपरि विश्वासो व्यज्यते । अतिसंधीयते वञ्चयते । भगवन्कुसुमायुध, त्वया चन्द्रमसा च परपीडावैमुख्यात् परोपकारपरत्वाच्च विश्वसनीयाभ्यां युवाभ्यां विश्वसनीयत्वेन युवयोरुपरि विश्वासवान् कामिजनसार्थोऽतिसंधीयते; अनुचितमेतद्युवयोः; अतस्ततो विरन्तव्यमित्यर्थः । अत्राप्रस्तुतात्सामान्यात् प्रस्तुतविशेषप्रतीतेः युवां मां न वञ्चयेतामित्यर्थः ॥

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ ४ ॥

( सखेदं परिक्रम्य ) क नु खलु संस्थिते कर्मणि सदस्यै-रनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि । ( निःश्वस्य ) किं किल प्रियादर्शनादृते शरणमन्यत्? यावदेनामन्विष्यामि । ( सूर्यमवलोक्य ) इमामुग्रातपां वेलां प्रायेण

---

अतिसंधेर्ज्ञापकमाह— तवेति । कुत इति चेदुच्यत इत्यर्थः । अर्थमनतिक्रम्य वर्तत इति यथार्थम्, तदन्यत् अयथार्थम् अनन्वर्थमित्यर्थः । त्वद्विधेष्वयथार्थं चेत्कथमावयोरतिसंधिः स्यादित्याह शिक्यघटन्यायेन— विसृजतीत्यादि । वज्रवत् साराः वज्रसाराः, यदि वा वज्रसारो नाम अयोविशेषः, तन्मयान्करोषि ॥

क नु खल्विति । उपविश्येत्यर्थात् । वेद्या एकदेशः सदः, सदोऽर्हन्तीति सदस्याः । संस्थिते समाप्ते 'संस्थाप्यवस्थाप्रणिधिसमाप्त्याकारमृत्युषु' इति वैजयन्ती । कर्मणि प्रातःसवने । आत्मानं मनः । किं किलेति नास्तीत्यर्थः । कालेन तदधिष्ठितं देशं वितर्कयति— इमामिति । लतावलयवत्सु लतामण्टपवत्सु । अनेन शैत्यातिशयो व्यज्यते; उग्रातपामित्यनेन औष्ण्यातिशयश्च, तेना-

लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति । तत्रैव तावद्गच्छामि । ( परिक्रम्य स्पर्शसुखं रूपयित्वा ) अहो प्रवातसुभगोऽयमुद्देशः ।

शक्यमरविन्दसुरभिः
कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तै-
रविरलमालिङ्गितुं पवनः ॥ ४ ॥

---

न्यत्र अनतिवाह्यत्वं च । तीरेष्विति बहुवचनं लतावलयबहुत्वकटाक्षेण । उपविश्येत्यर्थात् । ससखीजना, सखीजनक्रियमाणशिशिरोपचारेत्यर्थः । गमयति कृच्छ्रेण अतिवाहयति । प्रभूतो वातो यस्मिन्सः प्रवातः, प्रवातश्चासौ सुभगश्च प्रवातसुभगः । प्रभूतत्वमुपपादयति—**शक्यमिति** । अत्रैवमन्वयः— प्रथमं शक्यमिति ; किमप्यस्तीति शेषः । पश्चात्किं तदित्याकाङ्क्षायां पवन आलिङ्गितुमिति निर्वाह एषः । अत्र वामनः— 'शक्यमिति रूपं कर्माभिधायां लिङ्गवचनस्यापि सामान्योपक्रमात्' इति सूत्रम् । सामान्योपक्रमः विशेषानपेक्षा ; उदाहरणं यथा श्रीमहाभाष्ये 'शक्यं श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्' इति वृत्तिः । अत्र विशेषणैः शैत्यसौरभ्यमान्द्यान्युक्तानि । अतिशयोक्तिरियम्, आलिङ्गनशक्यत्वस्यासंबन्धे संबन्धकथनात् ॥

( परिक्रम्यावलोक्य च ) अस्मिन्वेतसपरिक्षिप्ते लतामण्डपे संनिहितया शकुन्तलया भवितव्यम् । तथा हि—

अभ्युन्नता पुरस्ता-
दवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते
पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ५ ॥

यावद्विटपान्तरेणावलोकयामि । (परिक्रम्य तथा कृत्वा सहर्षम्) अये, लब्धं नेत्रनिर्वाणम् । एषा मे मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामन्वास्यते । भवतु । श्रोष्याम्यासां विस्रम्भकथितानि ।

[इति विलोकयन्स्थितः ।

---

अस्मिन्निति । परिक्षिप्ते परिवृते ॥

अभ्युन्नतेति । पदानाम् अङ्घ्रिविन्यासप्रतिबिम्बानाम् । 'पदमङ्घ्रौ शरे त्राणे व्यवसायापदेशयोः । स्थाने चिह्नेऽङ्घ्रिविन्यासे पद्यभागेंऽशुवस्तुनोः ॥ याने वाक्ये सुप्तिङन्ते' इति केशवः ॥

लतामण्डपे शकुन्तलामालोक्य दुष्यन्नाह— अये इति । लब्धं नेत्रनिर्वाणमिति, इतोऽधिकमस्मन्नेत्राह्लादकं किमपि नेति भावः । मनोरथप्रियतमा विषये विषय्युपचारः— मनोरथानां विषयभूता । शिलापट्टं प्रशस्तशिलाम् ॥

(ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ।)

**सख्यौ—** (उपवीज्य सस्नेहम्) हला सउन्दले, अवि सुहाय दे णलिणीपत्तवादो ?

हला शकुन्तले, अपि सुखाय तव नलिनीपत्रवातः ?

**शकुन्तला—** किं वीअअन्ति मं सहीओ ?

किं वीजयतो मां सख्यौ ?

(सख्यौ विषादं नाटयित्वा परस्परमवलोकयतः ।)

**राजा—** बलवदस्वस्थशरीरा शकुन्तला दृश्यते । (सवितर्कम्) तत्किमयमातपदोषः स्यात्, उत मदनदोषः ? उभयथा मे मनसि वर्तते । (साभिलाषं निर्वर्ण्य) अथवा कृतं संदेहेन ।

**स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं**
**प्रियायाः साबाधं तदपि कमनीयं वपुरिदम् ।**

---

सुखाय सुखं कर्तुं भवतीति शेषः । तापातिशयेन वातस्पर्शमजानती पृच्छति— **किमिति** । तस्यास्तापातिशयमवधार्याह— बलवदिति । अस्वस्थताहेतुं विकल्पयति— तत्किमिति । आतपो ग्रीष्मः । भेदमजानन्नाह— उभयथेति । अथ सूक्ष्मेक्षिकया कमपि भेदमुपलभ्याह— अथवेति । कृतं पर्याप्तम्; संदेहो मास्त्वित्यर्थः । 'युगपर्याप्तयोः कृतम्' इत्यमरः ॥

कुत इत्याह— **स्तनेति**। प्रशिथिलेति शिथिलत्वमाश्रयस्य तान-

समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ६ ॥

**प्रियंवदा**— (जनान्तिकम्) अणसूए, तस्स राएसिणो पढमदंसणादो आरहिअ पज्जुस्सुअमणा आपण्णा विअ सउन्दला। किं णु क्खु से तण्णिमित्तो एव्व अअं आदङ्को भवे।

अनसूये, तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकमना आपन्नेव शकुन्तला। किं नु खलु अस्यास्तन्निमित्त एवायमातङ्को भवेत्।

**अनसूया**— सहि, मम वि ईदिसी आसङ्का हिअअस्स। होदु। पुच्छिस्सं दाव णं। (प्रकाशम्) सहि, पुच्छिदव्वासि। किंपि बलिओ क्खु दे संदावो।

---

वेन ऊष्मणा च। एकशब्देन अन्यमयत्वव्यपोह उक्तः। कमनीयं लावण्यानपगमाद्दर्शनीयम्। अपराद्धम् अपराधः, ताप इति यावत्। ग्रीष्मतापे वपुरेवं सुभगं न स्यात्; अतः कामताप एष इत्यर्थः ॥

तापस्य शिशिरवस्त्वसाध्यशमनत्वात् कामनिमित्तत्वमाशङ्कते— **अनसूये इति**। आतङ्को बाधा 'यक्ष्मातङ्कगदाबाधाशब्दाः पर्यायवाचिनः' इति। कुत इत्याह— किमपीति ॥

सखि, ममापीदृश्याशङ्का हृदयस्य । भवतु । प्रक्ष्यामि तावदेनाम् । सखि, प्रष्टव्यासि । किमपि बलीयान्खलु ते संतापः ।

**शकुन्तला—** ( पूर्वार्धेन शयनादुत्थाय ) हला, किं वत्तुकामासि ।

हला, किं वक्तुकामासि ।

**अनसूया—** हला सउन्दले, अणब्भन्तरा क्खु अह्मे मदणगदस्स वुत्तन्तस्स । किंदु जादिसी इदिहासणिबन्धणेसु कामअमाणाणं समवत्था सुणीअदि, तादिसी दे लेक्खीअदि । कहेहि किंणिमित्तो दे आआसो । विआरं क्खु परमत्थदो अजाणिअ अणारम्भो पडिआरस्स ।

हला शकुन्तले, अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य । किंतु यादृशीतिहासनिबन्धनेषु कामयमानानां समवस्था श्रूयते, तादृशी तव लक्ष्यते । कथय किंनिमित्तोऽयं तवायासः । विकारं खलु परमार्थतोऽज्ञात्वानारम्भः प्रतीकारस्य ।

**राजा—** अनसूयामप्यनुगतो मदीयस्तर्कः ।

---

कुतो निमित्तं जिज्ञासेत्याह— विकारमिति । तर्कः ऊहः,

**शकुन्तला**— (आत्मगतम्) बलिअं क्खु मे अहिणिवेसो। एदाणं वि सहसा ण सक्कुणोमि णिवेदिदुं।

बलीयान्खलु मेऽभिनिवेशः। एतयोरपि सहसा न शक्नोमि निवेदयितुम्।

**प्रियंवदा**— सहि, सुट्ठु एसा भणादि। किं अत्तणो आतङ्कं उवेक्खसि। अणुदिअहं क्खु परिहीअसि अङ्गेहिं। केवलं लावण्णमई छाआ तुमं ण मुञ्चदि।

सखि, सुष्ठ्वेषा भणति। किमात्मन आतङ्कमुपेक्षसे। अनुदिवसं खलु परिहीयसेऽङ्गैः। केवलं लावण्यमयी च्छाया त्वां न मुञ्चति।

**राजा**— अवितथमाह प्रियंवदा। तथा हि—

**क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं**
**मध्यः क्लान्ततरः प्रकामविनतावंसौ च्छविः पाण्डुरा।**

---

कामयमानावस्थैषेति। एतयोरपि स्नेहबहुमानविश्वासपात्रयोरपि। नायमुपेक्षायाः काल इत्याह— अनुदिवसमिति। छाया कान्तिः॥

**क्षामेति**। क्षामक्षामौ अतिक्षामौ कपोलौ यस्य। तत्प्रकामौ मध्यांसगतनैसर्गिकक्लान्तिविनत्यपेक्षौ। शोच्या, कार्श्यवैवर्ण्यादिना।

शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्त्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥

**शकुन्तला**— सहि, कस्स वा अण्णस्स कहइस्सं । आआसइत्तिआ दाणिं वो भविस्सं ।

सखि, कस्य वान्यस्य कथयिष्यामि । आयासयित्रीदानीं युवयोर्भविष्यामि ।

**उभे**— अदो एव्व क्खु णिब्बन्धो । संविभत्तं हि दुक्खं सज्झवेदणं होदि ।

अत एव खलु निर्बन्धः । संविभक्तं हि दुःखं सह्यवेदनं भवति ।

---

प्रियदर्शना, लावण्यानपगमात् । शोषणेन, शोषयतीति शोषणः । विशिष्टमरुत्स्पृष्टत्वेन शुष्कपत्त्रत्वमुक्तम् ।

सखीनिर्बन्धेनायासहेतुं वक्तुमारभते— **कस्य वेति** । युवयोर्न कथयामि चेदिति शेषः । युवयोः कथयिष्यामीति भावः । तत्किं विलम्बसे ; तुल्यसुखदुःखो हि सखीजनः ; अत आह— आयासयित्रीति । अत एव, आवयोरप्यायासः स्यादित्यत एव । किं तत इत्याह— संविभक्तमिति ॥

**राजा—**

> **पृष्टा जनेन समदुःखसुखेन बाला**
> **नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।**
> **दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-**
> **मत्रान्तरे श्रवणकातरतां गतोऽस्मि ॥ ८ ॥**

**शकुन्तला—** सहि, जदा पहुदि दंसणपहं आअदो तवोवणरक्खिदा सो राएसी, तदा आरहिअ तग्गदेण अहिलासेण एतदवत्थम्हि संवुत्ता ।

सखि, यदा प्रभृति दर्शनपथमागतः तपोवनरक्षिता स राजर्षिः, तदारभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता ।

---

अहमेवास्या आयासनिमित्तमिति निश्चिन्वानोऽप्यपायशङ्की आह—**पृष्टेति** । बाला आर्त्यसहना स्वयं प्रतीकाराशक्ता च । मनोगतं गूढम् । आधिहेतुं हृदयवल्लभम् । दृष्टः दृश्यबुद्ध्यावलोकितः । विवृत्य विवलितमुखी भूत्वा न तु यदृच्छया । बहुशः न त्वेकवारं द्विवारं वा । सतृष्णं न तु सस्मयम् । अत्रान्तरे प्रश्नप्रतिवचनयोर्मध्ये । श्रवणात् कातरताम् इदानीमन्यं कंचन शृणोमीति भीरुताम् । विशिष्टवीक्षितोऽहमेवाधिहेतुरिति निश्चिन्वानोऽपि श्रवणकातरतां गतोऽस्मीत्यर्थः ॥

राजा— (सहर्षम्) श्रुतं श्रोतव्यम् ।

स्मर एव तापहेतु-
निर्वापयिता स एव मे जातः ।
दिवस इवार्धश्याम-
स्तपात्यये जीवलोकस्य ॥ ९ ॥

शकुन्तला— तं जइ वो अणुमदं ता तह वट्टह जह तस्स राएसिणो अणुकम्पणिज्जा होमि । अण्णहा ओसिञ्चह दाणिं मे उदअं ।

तद्यदि युवयोरनुमतं तदा तथा वर्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथा अवसिञ्चतमिदानीं मे उदकम् ।

---

श्रुतं श्रोतव्यम्— इतः परमस्मच्छ्रवणसुखकरं किमपि न; एतच्छ्रुतवतो मम श्रोतव्यं न किंचिदवशिष्यते; अत एव लब्धं श्रोत्रेन्द्रियसत्तासाफल्यमिति भावः ॥

स्मर एवेति । निर्वापयितृत्वं श्रोतव्यश्रवणप्रयोजकत्वात् । अर्धे अपरार्धे श्यामः नवाम्बुदाच्छादितातपत्वात् । तपात्यये तपो ग्रीष्मः । 'ग्रीष्म ऊष्मागमस्तपः' इत्यमरः । प्रावृडारम्भ इत्यर्थः ॥

उदकावसेचनमत्र प्रेतकार्यम्, अन्यथा मे प्राणापायोऽवश्यं स्या-

**राजा—** संशयच्छेदि वचनम् ।

**प्रियंवदा—** (जनान्तिकम्) अणसूए, दूरगअमम्महा अक्खमा इअं कालहरणस्स । जस्सि बद्धभावा एसा सो ललामभूदो पोरवाणं । ता जुत्तं से अहिळासो अहिणन्दिदुं ।

अनसूये, दूरगतमन्मथाक्षमेयं कालहरणस्य । यस्मिन्बद्धभावैषा स ललामभूतः पौरवाणाम् । तद्युक्तमस्या अभिलाषोऽभिनन्दितुम् ।

**अनसूया—** तह, जह भणासि ।

तथा, यथा भणसि ।

**प्रियंवदा—** (प्रकाशम्) सहि, दिट्ठिआ अणुरूवो दे अहिणिवेसो । अह वा साअरं उज्झिअ कहिं वा महाणई ओदरइ ?

---

दिति भावः । संशयच्छेदि सख्योः संशयम् आवामेतदनुमन्यावहे वा न वेत्येवंरूपं छेत्तुं शीलवत् । दूरगतमन्मथा मूर्छितमन्मथपीडा । कालहरणस्य कालातिवाहनस्य । ललामभूतः अलंकारभूतः । अभिनन्दति— दिष्ट्येति । अथ वा, न श्लाघनीयमेतदित्यर्थः । कुत इत्याह— सागरमिति । स्वभाव एष इति भावः । स एवानुरूप-

सखि, दिष्ट्यानुरूपस्तेऽभिनिवेशः । अथ वा सागरमुज्झित्वा कुत्र वा महानद्यवतरति ?

**अनसूया**— को दाणिं सहआरं अन्दरेण अदिमुत्तलदं पल्लविदं लेहेदि ?

क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां लभते ?

**राजा**— किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते ।

**अनसूया**— हला, को उण उवाओ भवे, जेण अविलम्बिअं णिहुअं अ सहीमणोरहं संपादेम्ह ?

सखि, कः पुनरुपायो भवेत्, येनाविलम्बितं निभृतं च सखीमनोरथं संपादयावः ?

**प्रियंवदा**— णिहुअंत्ति चिन्ता भवे । सिग्घंत्ति सुअरं ।

निभृतमिति चिन्ता भवेत् । शीघ्रमिति सुकरम् ।

**अनसूया**— कहं विअ ?

कथमिव ?

---

स्त्वां लभेतेत्याह— क इति । किमत्रेति । यदीति सिद्धानुवादे । विशाखयोर्द्वित्वमुक्तं माधवीये— 'शूर्पद्विदैवसंज्ञा विशाखयोः' इति । सख्यावेनामनुवर्तेते इत्यत्र न विस्मय इत्यर्थः । निभृतं निगूढम् । चिन्ता उपायचिन्ता । कथमिव, सुकरमिति शेषः ॥

**प्रियंवदा—** णं सो राएसी इमस्सिं सिणिद्धदिट्ठिसूइदाहिलासो इमाइं दिअहाइं पजाअरकिसो लक्खीआदि ।

नन्नु स राजर्षिरेतस्यां स्निग्धदृष्टिसूचिताभिलाषोऽमून्दिवसान्प्रजागरकृशो लक्ष्यते ।

**राजा—** सत्यमित्थंभूत एवास्मि । तथा हि—

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रसर्पिभिरश्रुभिः ।
अनतिलुलितज्याघाताङ्कं मुहुर्मणिबन्धना-
त्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥

**प्रियंवदा—** (विचिन्त्य) हला, मअणलेहो से करीअदु ।

---

तस्यापि संगमौत्सुक्यादित्याह कार्यमुखेण— **नन्नु स** इति । इत्थंभूतः विनिद्रः कृशश्च ॥

उक्तमुपपादयति— **इदमिति** । अशिशिरैः उष्णैः । हेतुभावगर्भमेतत् । भुजे उपधानीकृते न्यस्तात् अपाङ्गात् प्रवहद्भिः । अनतिलुलितज्याघाताङ्कम् अनतिलुलितः अनतित्यक्तः औज्ज्वल्याभावात्, ज्याघाताङ्कः श्यामा ज्याघातरेखा येन । प्रतिसार्यते स्वस्थानं प्रकोष्ठं नीयते । अत्राश्रुप्रसर्पणं निद्राच्छेदस्योपपादकम् । वलयस्रंसनं तनुतायाश्च ॥

तं सुमणोगोविदं देवसेसापदेसेण तस्स राएसिणो हत्थं पावइस्सं ।

हला, मदनलेखोऽस्य क्रियताम् । तं सुमनोगोपितं देवशेषापदेशेन तस्य राजर्षेर्हस्तं प्रापयिष्यामि ।

**अनसूया**— रोअइ मे सुउमारो अअं णिओओ । किं वा सउन्दला भणादि ?

रोचते मे सुकुमारोऽयं नियोगः । किं वा शकुन्तला भणति ?

**शकुन्तला**— किं णिओओ तुह्माणं विकप्पीअदि ?

किं नियोगो युवयोर्विकल्प्यते ?

**प्रियंवदा**— तेण हि अत्तणो उवण्णासरूअं चिन्तेहि किं वि ललिअपदबन्धणं ।

---

निभृतं कर्तुमुपायमाह— **मदनलेख इति ।** मदनपीडासूचको लेखः । लिखत्यस्मिन्निति लेखः पत्रिका । उक्तं संवदति— रोचत इति । सुकुमारः सुकरः । किं वा शकुन्तला भणति, शकुन्तलायै रोचते वा न वेति भावः । किं नियोगो युवयोर्विकल्प्यते, युवयोर्नियोगमनुतिष्ठामीति भावः । आत्मनः आत्मावस्थायाः । ललितं कोमलम्, पदबन्धनं पद्यम् ॥

तेन ह्यात्मन उपन्यासरूपं चिन्तय किमपि ललित-पदबन्धनम् ।

**शकुन्तला**—हला, चिन्तेमि अहं ; अवहीरणाभीरुअं वेवइ मे हिअअं ।

हला, चिन्तयाम्यहम् ; अवधीरणाभीरु वेपते मे हृदयम् ।

**राजा**—

अयं स ते तिष्ठति संगमोत्सुको
विशङ्कसे भीरु यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥ ११ ॥

---

अवधीरणा याच्ञाभङ्गः ॥

अवधीरणाशङ्कामसहमानः अस्थाने तवावधीरणाशङ्केत्याह— **अयं स इति** । भीरु भयशीले; शीलं हि यत्नेनापि न वारयितुं शक्यमिति भावः । संगमे उत्सुकः उत्कण्ठातिशयेन काललवमप्यतिवाहयितुमसमर्थः । तिष्ठति तवानुकूल्यं प्रतीक्षते । अतस्तस्मादवधीरणा न शङ्कनीयेत्यर्थः । प्रत्युत तेनावधीरणा शङ्कनीया, न त्वयेत्याह— लभेतेति । श्रियं लभेतेत्यन्वयः । यस्त्वां प्रार्थयते, स लभेत वा न वा ; त्वया प्रार्थितो दुरापो न भवेदित्यर्थः । सादृश्यनिबन्धनाप्रस्तुतप्रशंसालालंकारः ॥

**सख्यौ**— अत्तगुणावमाणिणि, को दाणिं सरीरणिव्वावइत्तिअं जोसिणिं पडन्तेण वारेदि ?

आत्मगुणावमानिनि, क इदानीं शरीरनिर्वापयित्रीं ज्योत्स्नां पटान्तेन वारयति ?

**शकुन्तला**— णिउत्ता दाणिं ह्मि ।

नियुक्तेदानीमस्मि । [ इत्युपविष्टा चिन्तयति ।

**राजा**— स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः,

**उन्नमितैकभ्रूलत-**
**माननमस्याः पदानि रचयन्त्याः ।**
**कण्टकितेन प्रथयति**
**मय्यनुरागं कपोलेन ॥ १२ ॥**

---

स त्वां नावधीरयिष्यतीत्याह— **आत्मेति** । नियुक्तेदानीमस्मि, युवयोर्नियोगमनुतिष्ठामीति भावः । स्थाने खलु युक्तमेव । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः ॥

कुत इत्याह— **उन्नमितेति** । भ्रूलतोन्नमनं चिन्तानुभावः । प्रथयति प्रकाशयति ॥

**शकुन्तला**— हला, चिन्तिदं मए पत्थुअं । असण्णिहिदाणि उण लेहसाहणाणि ।

हला, चिन्तितं मया प्रस्तुतम् । असंनिहिते पुनर्लेखसाधने ।

**प्रियंवदा**— इमस्सिं सुओदरसुउमारे णलिणीपत्ते णहेहिं णिक्खित्तवण्णं करेहि ।

अमुष्मिञ्छुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं कुरु ।

**शकुन्तला**— (यथोक्तं रूपयित्वा) हला, सुणुह दाव— एदं संगदत्थं ण वेत्ति ।

हला, शृणुतं तावत्— एतत्संगतार्थं न वेति ।

**उभे**— अवहिद म्ह ।

अवहिते स्वः ।

**शकुन्तला**— (वाचयति ।)

---

हला चिन्तितं मया प्रस्तुतम्, विचिन्त्य विरचितम् । लेखसाधने लेखिनीपत्रिके । निक्षिप्तवर्णं कुरु, प्रस्तुतमित्यर्थात् । शुकोदरेत्यनेनाक्षरविन्याससौकर्यं व्यज्यते । शृणुतम्, श्रुत्वा परीक्षां कुरुतमित्यर्थः । अवहिते स्वः, वाच्यतामिति भावः ॥

तुज्झ ण जाणे हिअअं

मह उण मअणो दिवा वि रत्तिं वि ।

णिग्घिण तवइ बळीअं

तुमम्मि अहिमुहमणोरहं हिअअम् ॥ १३ ॥

तव न जाने हृदयं

मम पुनर्मदनो दिवापि रात्रिमपि ।

निर्घृण तपति बलीय-

स्त्वय्यभिमुखमनोरथं हृदयम् ॥

**राजा**— (सहसोपसृत्य)

तपति तनुगात्रि मदन-

स्त्वामनिशं मां पुनर्दहत्येव ।

---

**तवेति** । हे निर्घृण, तव नैर्घृण्यमेकमेव मम दुरवस्थाया हेतुरिति भावः । तव हृदयं न जानामि, तव हृदयाज्ञाने मम हृदयनिवेदनमनुचितम्, तथापि निवेदयामीति भावः । तव हृदयं मदभिमुखमनोरथं वा न वेति न जानामि ; मम हृदयं पुनस्त्वय्यभिमुखमनोरथं त्वयि साभिलाषम् । अतो मदनः दिवा रात्रावपि सातिशयं तपति ; अतस्त्वदेकशरणायां मयि घृणां कुरुष्वेति भावः ॥

अस्मदवस्थामस्यै निवेदयितुमयमेवावसर इति सहसोपसृत्य मम

ग्लपयति यथा शशाङ्कं

न तथा हि कुमुद्वतीं दिवसः ॥ १४ ॥

**सख्यौ**— (सहर्षम्) साअदं अविळम्बिणो मणोरहस्स ।
स्वागतमविलम्बिनो मनोरथस्य ।

( शकुन्तला अभ्युत्थातुमिच्छति । )

**राजा**— अलमलमायासेन ।

संदष्टकुसुमशयना-

न्याशुक्लान्तबिसभङ्गसुरभीणि ।

गुरुपरितापानि न ते

गात्राण्युपचारमर्हन्ति ॥ १५ ॥

---

हृदयं भवती जानात्वित्याह– तपतीति । पुनःशब्दो विशेषद्योतकः । विशेषमाह– दहतीति । दृष्टान्तमाह– ग्लपयतीति ॥

स्वागतमिति । अविलम्बिनः दर्शनोपायचिन्तासमय एव दृष्टस्य । मनोरथस्य, विषये विषय्युपचारः, मनोरथविषयस्य । अनेन मनोरथानां साफल्यं व्यज्यते ॥

अवसरोचितं संभाषते— अलमित्यादिना । संदष्टं संश्लिष्टं स्वेदार्द्रतया कुसुमशयनं येषु । आशु स्पर्शसमय एव क्लान्तैः म्लानैः बिसभङ्गैः मृणालखण्डैः वलयहारादिस्थानीयैः सुरभीणि । उपचा-

**अनसूया**— इदो सिळातलेक्कदेसं अलंकरेदु वअस्सो ।

इतः शिलातलैकदेशमलंकरोतु वयस्यः ।

(राजा उपविशति । शकुन्तला सलज्जा तिष्ठति ।)

**अनसूया**— वअस्स, दुवेणं वो अण्णोण्णाणुराओ पच्च-क्खो । सहीसिणेहो मं पुणरुत्तवादिणिं करेदि ।

वयस्य, द्वयोर्वामन्योन्यानुरागः प्रत्यक्षः । सखी-स्नेहो मां पुनरुक्तवादिनीं करोति ।

**राजा**— भद्रे, नैतत्परिहार्यम् । विवक्षितं ह्यनुक्तमनुतापं जनयति ।

**अनसूया**— आवण्णस्स विसअवासिणो जणस्स अत्तिह-रेण रण्णा होदव्वं त्ति एसो वो धम्मो ।

---

रम् अभ्युत्थानादिकं सत्कारम् ॥

अथोचितप्रतिपत्तिजागरूकानसूया लोकोत्तरयोरन्योन्यानुरूपयोः परकाष्ठाप्राप्तपरस्परानुरागयोश्चिराभिलाषितसमागमयोर्दैवाद्रहसि संगतयोस्तयोर्मनोरथपूरणसरण्यवगाहनायावतारं रचयति— **वयस्येति** । पुनरुक्तशब्देनानुपादेयं लक्ष्यते । परस्परानुरागे विदिते सति अन्येन वक्तव्यं किमपि न; अतः सखीस्नेहेन मम यद्विवक्षितम्, तदनुपादेयमेव । अतो न वच्मीत्यर्थः । भद्रे इति । त्वया विवक्षितमुपादेयमेवेति भावः । विवक्षितमिति । अतो वक्तव्यमेवेत्यर्थः ।

आपन्नस्य विषयवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यमित्येष वो धर्मः ।

**राजा**— नास्मात्परम् ।

**अनसूया**— तेण हि इअं णो पिअसही तुमं एव्व उद्दिसिअ इमं अवत्थन्तरं भअवदा मअणेण आरोविदा । ता अरुहसि अब्भुववत्तीए जीविदं से अवलम्बिदुं ।

तेन हीयमावयोः प्रियसखी त्वामेवोद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता । तदर्हस्यभ्युपपत्त्या जीवितमस्या अवलम्बितुम् ।

**राजा**— भद्रे, साधारणोऽयं प्रणयः । सर्वथानुगृहीतोऽस्मि ।

**शकुन्तला**— ( प्रियंवदामवलोक्य ) अलं दे अन्तेउरविरहपज्जुस्सुअस्स राएसिणो उवरोहेण ।

अलं ते अन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन ।

---

अस्मात् आर्तत्राणात् परम् अन्यत् । अभ्युपपत्तिः अनुग्रहः । प्रणयः याच्ञा । अयम् अभ्युपपत्त्या जीवितमवलम्बस्वेत्येवंरूपः । 'प्रणयः स्यात्परिचये याच्ञायां सौहृदेऽपि च' इत्यमरः । साधारणः, आवयोरिति शेषः । लाघवभयेन तां रुणद्धि— अलमिति । अस्य पर्युत्सुकत्वमन्तःपुरविषयमेव; अतोऽस्मत्प्रार्थना उपरोध एव; तं मा कृथा इत्यर्थः ॥

राजा—

इदमनन्यपरायणमन्यथा
हृदयसंनिहिते हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे
मदनबाणहतोऽपि हतः पुनः ॥ १६ ॥

अनसूया— वअस्स, बहुवळ्ळहा राआणो सुणीअन्ति । जह णो पिअसही बन्धुअणसोअणिज्जा ण होइ, तह णिव्वह ।

वयस्य, बहुवल्लभा राजानः श्रूयन्ते । यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति, तथा निर्वह ।

---

तदसहमान आह— इदमिति । अन्यत्र परायणम् आसङ्गोऽनुरागो यस्य तत् अन्यपरायणम्, तदन्यत् अनन्यपरायणम् । अन्यथा अन्यपरायणमिति । 'साकल्यासङ्गवचने पारायणपरायणे' इत्यमरः । हृदयसंनिहिते, सदा तत्र वर्तमाना त्वं कथं तदवस्थां न वेत्सीति भावः । पुनर्हत इति, अरुंतुदमेतदिति भावः ॥

कार्यज्ञा कार्यं निष्कर्षति— वयस्येति । तव बह्व्यो वल्लभाः सन्ति, तास्वेकैकेति सामान्यदृष्टिं मा कृथा इत्यर्थः ॥

**राजा**— भद्रे, किं बहुना ।

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्ररशना चोर्वी सखी च युवयोरियम् ॥१७॥

**उभे**— णिव्वुदाओ म्ह ।

निर्वृते स्वः ।

**प्रियंवदा**— (सदृष्टिक्षेपम्) अणसूए, जह एसो इदो तदो दिण्णदिट्ठी उस्सुओ मिअपोदओ मादरं अण्णेसदि । एहि । संजोअएम णं ।

अनसूये, यथैष इतस्ततो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति । एहि । संयोजयाव एनम् ।

[इत्युभे प्रस्थिते ।

---

प्रत्युतेयमेव मे प्रधानदेवीत्याह— **परिग्रहेति** । अत्र कुलक्रमागतायां सागरान्तायामुर्व्यामिव ममास्यां बहुमान इति, अस्यां जातो मे वंशकर इति च व्यज्यते ॥

छन्दानुवृत्तिचतुरा लतामण्डपान्निर्गन्तुमुपायमाह— **अनसूये इति** । संयोजयाव एनम्, मात्रेति शेषः । अत्रौत्सुक्येन इतस्ततोऽवलोकनेन च मृगपोतकस्य मात्रन्वेषणमनुमीयते । यथा उत्सुक इतस्ततो दत्तदृष्टिः, तथा मातरमन्विष्यतीत्यन्वयः । त्वं सशरणै-

**शकुन्तला**— हला, असरण म्हि । अण्णदरा वो गच्छदु ।

हला, अशरणास्मि । अन्यतरा युवयोर्गच्छतु ।

**उभे**— जो पुहवीए सरणं सो तुह समीवे ।

यः पृथिव्याः शरणं स तव समीपे ।

[इति निष्क्रान्ते ।

**शकुन्तला**— हा गदाओ एव्व ।

हा गते एव ।

**राजा**— अलमलमावेगेन । नन्वयमाराधयिता जनस्तव समीपे वर्तते ।

**किं शीतलैः क्लमविनोदिभिरार्द्रवाता-**
**न्संचारयामि नलिनीदलतालवृन्तैः ।**

---

वेत्याह— **पृथिव्या इति** । तव समीपे, वर्तते इति शेषः । शरणागतानां सर्वेषां रक्षितेत्यर्थः । हा इति विषादे । लज्जासाध्वसतरलां तामवसरोचितेन प्रियभाषणेनानुकूलयितुमारभते— **अलमिति** । आवेगेन संभ्रमेण । 'स्यादावेगोऽतिसंभ्रमः' इत्यमरः । सखीजनासांनिध्येन संभ्रमो मा भूदित्यर्थः । कुत इत्याह— नन्विति । आराधयितायं जन इति । अहमेव तव शुश्रूषायां मुख्याधिकारीति भावः । समीपे वर्तते, अवसरप्रेप्सुः ॥

छन्दमनुवर्तितुं पृच्छति— **किमिति** । शैत्यात्संतापहरैः, आर्द्र-

अङ्के निधाय करभोरु यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥ १८ ॥

**शकुन्तला**— ण माणणीएसु अत्ताणं अवराहइस्सं ।
न माननीयेष्वात्मानमपराधयिष्यामि ।

[इत्युत्थाय गन्तुमिच्छति ।

**राजा**— सुन्दरि, अपरिनिर्वाणो दिवसः । इयं च ते शरीरावस्था ।

उत्सृज्य कुसुमशयनं
नलिनीदलकल्पितस्तनावरणम् ।

---

वातान् सान्द्रसमीरणान् । संचारयामि सम्यक् सर्वाङ्गीणं चारयामि । नलिनीदलतालवृन्तैः, बहुत्वादुपमा । अङ्के निधायेत्यनेन संवाहनपाटवम्, करभोरु इत्यनेनोरुकाण्डसंस्पर्शौत्सुक्यम्, यथासुखमित्यनेन सखीजनवदिच्छानुवृत्तिचातुर्यम्, पद्मताम्रावित्यनेन सौकुमार्यं तेन स्पर्शसुखं च व्यज्यते ॥

**अपराधयिष्यामि** अपराधिनं करिष्यामि । कालदेशावस्थानुचितं प्रतिपादयन् गमनं निरुन्द्धे— **सुन्दरीति** । सुन्दरीत्यनेन स्वत आतपासहिष्णुत्वं व्यज्यते । अपरिनिर्वाणः कठोरातपः । इयम् ईदृशसंतापशालिनी ॥

**उत्सृज्येति** । कुसुमशयनं संतापहरेषु मूर्धन्यम् । नलिनीदलेन

**कथमातपे गमिष्यसि**

**परिबाधापेलवैरङ्गैः ॥ १९ ॥**

[इति बलादेनां निवर्तयति ।

**शकुन्तला**— पोरव, रक्ख विणअं । मअणसंतत्ता वि ण हु अत्तणो पहवामि ।

पौरव, रक्ष विनयम् । मदनसंतप्तापि न खल्वात्मनः प्रभवामि ।

**राजा**— भीरु, अलं गुरुजनभयेन । दृष्ट्वा गृहीतधर्मा तत्र-भवान्नात्र दोषं ग्रहीष्यति कुलपतिः । यतः,

**गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः ।**

---

झटिति ग्लास्नुना । आतपे बलवतामपि सद्योबलहरे । परिबाधा-पेलवैः मदनपीडादुर्बलैः । अङ्गैरुपलक्षिता, कथं गमिष्यसि, अश-क्यमेतत् ; अहो तवाविमृश्यकारिता ; तद्विरम गमनादिति भावः ॥

पौरव, अनुचितं तवाविनयाचरणमिति भावः । विनयं रक्ष, हठान्मा स्पृशः । कुत इदमनानुकूल्यमित्याह— मदनेति । न प्रभवामि, यदुक्तम्— 'न स्त्री स्वातन्त्र्यमर्हति' इति । **भीर्विति ।** अस्थाने तव भयमिति भावः । कुत इत्याह— दृष्ट्वेति । दृष्ट्वा वि-चार्य । गृहीतधर्मा अवगतधर्मरहस्यः । अत्र अस्मिन्समागमे ॥

कुत इत्याह— **गान्धर्वेणेति ।** अष्टविधो विवाहः ; यदुक्तं

श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥

**शकुन्तला—** अइ मुञ्च दाव । भूओ वि सहीजणं अणुमाणइस्सं ।

अयि मुञ्च तावत् । भूयोऽपि सखीजनमनुमानयिष्यामि ।

**राजा—** भवतु । मोक्ष्यामि ।

**शकुन्तला—** कदा ?

कदा ?

**राजा—**

अपरिक्षतकोमलस्य याव-
त्कुसुमस्येव नवस्य षट्पदेन ।

---

भारते— 'ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः । गान्धर्वराक्षसौ चान्यौ पैशाचश्चाष्टमः स्मृतः' इति । तत्र गान्धर्वो यथा— 'सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः । करस्पर्शस्तु गान्धर्वः' इति । पितृभिश्चाभिनन्दिता इति । राजर्षीणां गान्धर्वस्य मुख्यत्वात्; यदुक्तम्— 'क्षत्रियस्य तु गान्धर्वो विवाहः श्रेष्ठ उच्यते' इति ॥

अपरिक्षतेति । अपरिक्षतः अनवाप्तदन्तपदः । उपमया ग्रहणचातुर्यं माधुर्यसौरभे च व्यज्यन्ते, सदयमित्यनेन लोभनीयत्वम् ,

अधरस्य पिपासता मया ते
सदयं सुन्दरि गृह्यते रसोऽस्य ॥ २१ ॥

(इति मुखमस्याः समुन्नमयितुमिच्छति । शकुन्तला नाट्येन परिहरति ।)

(नेपथ्ये)

चक्कवाअवहुए, आमन्तेहि सहअरं । उवट्ठिआ रअणी ।

चक्रवाकवधु, आमन्त्रयस्व सहचरम् ! उपस्थिता रजनी ।

**शकुन्तला—** (ससंभ्रमम्) पोरव, असंसअं मह सरीरवुत्तन्तोवलम्भा अज्जा गोदमी इदो एव्व आअच्छदि । ता विडवन्तरिदो होहि ।

पौरव, असंशयं मम शरीरवृत्तान्तोपलम्भार्या गौतमी इत एवागच्छति । तस्माद्विटपान्तरितो भव ।

**राजा—** तथा । [इत्यात्मानमावृत्य तिष्ठति ।

---

पिपासतेत्यनेनौत्सुक्यातिशयश्च । यावदधररसो गृह्यते, तावन्मुञ्चामीति शेषः ॥

अथ द्वारि स्थिते सख्यौ गौतमीं दृष्ट्वा तां सख्यै निवेदयतः—चक्रवाकवधु इति । सखीभ्यामभिव्यञ्जितमर्थमवधार्याह—पौरवेति । शरीरवृत्तान्तस्य उपलम्भो ज्ञानं यस्याः सा शरीरवृत्तान्तोपलम्भा ॥

(ततः प्रविशति पात्रहस्ता गौतमी सख्यौ च ।)

**सख्यौ—** इदो इदो अज्जा गोदमी ।

इत इत आर्या गौतमी ।

**गौतमी—** (शकुन्तलामुपेत्य) जादे, अवि लहुसंदावाइं दे अङ्गाइं ?

जाते, अपि लघुसंतापानि तेऽङ्गानि ?

**शकुन्तला—** अत्थि मे विसेसो ।

अस्ति मे विशेषः ।

**गौतमी—** इमिणा सन्तिदब्भोदएण णिराबाधं एव्व दे सरीरं भविस्सदि । (शिरसि शकुन्तलामभ्युक्ष्य) वच्छे, परिणदो दिअहो । एहि । उडजं गच्छम्ह ।

अनेन शान्तिदर्भोदकेन निराबाधमेव ते शरीरं भविष्यति । वत्से, परिणतो दिवसः । एहि । उटजं गच्छामः ।

[इति प्रस्थिताः ।

**शकुन्तला—** (आत्मगतम्) हिअअ, पढमं एव्व सुहोवणदे मणोरहे कादरभावं ण मुञ्चसि । साणुसअविहट्टिअस्स कहं दे संपदि । (पदान्तरे स्थित्वा ; प्रकाशम्)

लदावलअ संदावहारअ, आमन्तेमि तुमं भूओ वि परिभोअस्स।

हृदय, प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि। सानुशयविहस्तितस्य कथं ते संप्रति। लतावलय संतापहारक, आमन्त्रये त्वां भूयोऽपि परिभोगाय। [इति दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः।

**राजा—** (पूर्वस्थानमुपेत्य; सनिःश्वासम्) अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः। मया हि,

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु॥ २२॥

---

नायकारब्धपरिचुम्बनाद्यनानुकूल्येन पश्चात्तापवत्याह— हृदयेति। मनोरथे तद्विषये दयिते। अनुशयः पश्चात्तापः सानुशयम्, अत एव विहस्तितं च सानुशयविहस्तितम्। कथं ते संप्रति, कातरभावमोक्ष इत्यर्थादायाति। लतागृहापदेशेन प्रियतममापृच्छते— लतेति॥

मुहुरिति। प्रतिषेधाक्षरैः मा मा अलमित्यादिभिः, विक्लबेन वैक्लब्येन चाभिरामं दर्शनीयम्। कथमपि कृच्छ्रात्॥

क्व नु खलु संप्रति गच्छामि । अथवा इहैव प्रियापरिभुक्तमुक्ते लतावलये मुहूर्तं स्थास्यामि । (सर्वतोऽवलोक्य)

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्रान्तो मन्मथलेख एष नलिनीपत्रे नखैरार्पितः ।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्ज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाच्छक्नोमि शून्यादपि ॥

(आकाशे)

राजन्,

सायंतने सवनकर्मणि संप्रवृत्ते
वेदिं हुताशनवतीं परितः प्रयस्ताः ।
छायाश्चरन्ति बहुधा भयमादधानाः
संध्यापयोदकपिशाः पिशिताशनानाम् ॥

---

तस्या इति । शरीरेण संतापातिशयान्मुहुर्मुहुर्लुठता लुलिता पर्याकुलीकृता । शून्यात् प्रियतमारहितात् ॥

सायंतन इति । छायाः प्रतिबिम्बानि, तत्त्वरितमागम्यतामिति भावः ॥

इति अभिरामविरचिते अभिज्ञानशाकुन्तलदिङ्मात्रदर्शने
तृतीयोऽङ्कः ॥

राजा— अयमयमागच्छामि ।

[ इति निष्क्रान्तः ।

इति तृतीयोऽङ्कः ।



# चतुर्थोऽङ्कः ॥

---*---

(ततः प्रविशतः कुसुमावचयं नाटयन्त्यौ सख्यौ ।)

**अनसूया**— हला पिअंवदे, जइ वि गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा सउन्दला अणुरूवभत्तुगामिणी संवुत्तेत्ति णिव्वुदं मे हिअअं, तह वि एत्तिअं चिन्तणिज्जं ।

हला प्रियंवदे, यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा शकुन्तलानुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम्, तथाप्येतावच्चिन्तनीयम् ।

**प्रियंवदा**— कहं विअ ।

कथमिव ।

**अनसूया**— अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विसज्जिओ अत्तणो णअरं पविसिअ अन्तेउरसमाअदो इदोगदं सुमरेदि वा ण वेत्ति ।

---

इत्येवं नायकयोः प्रदर्श्य गान्धर्वविवहनोपायम् । अधुना तस्यैव पुनर्निर्वाहादीनि सूच्यन्ते— **निर्वृतं** कृतकृत्यम् । तथाप्ये-

अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसृष्ट आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं स्मरति वा न वेति ।

**प्रियंवदा**—विस्सद्धा होहि । ण तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति । तादो दाणिं इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति ।

विस्रब्धा भव । न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति । तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति ।

**अनसूया**— जह अहं पेक्खामि, तह तस्स अणुमदं ।

यथाहं पश्यामि, तथा तस्यानुमतम् ।

**प्रियंवदा**— कहं विअ ।

कथमिव ।

---

तावच्चिन्तनीयम्, अस्तीति शेषः । इतोगतं शकुन्तलाविवाहादिकम् । न विस्मरतीत्याह— विस्रब्धेति । कुत इत्याह— नेति । आकृतिविशेषाः विशिष्टाकृतयः ; यदुक्तम्— 'यत्राकृतिस्तत्र गुणा वसन्ति' इति । तस्मादेतन्न चिन्तनीयमिति भावः । अन्यच्चिन्तनीयमस्तीत्याह—तात इति । तन्न चिन्तनीयमित्याह— यथाहं पश्यामि तथा

**अनसूया—** गुणवदे कण्णआ पडिवादणिज्जे त्ति अअं दाव तादस्स पुढमो संकप्पो । तं जइ देव्वं एव्व संपादेदि, णं अप्पआसेण किदत्थो अअं गुरुअणो ।

गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्तातस्य प्रथमः संकल्पः । तं यदि दैवमेव संपादयति, नन्वप्रयासेन कृतार्थोऽयं गुरुजनः ।

**प्रियंवदा—** एव्वं एदम् । (पुष्पभाजनं विलोक्य) सहि, अवइदाइं बलिकम्मपज्जत्ताइं कुसुमाइं ।

एवमेतत् । सखि, अपचितानि बलिकर्मपर्याप्तानि कुसुमानि ।

**अनसूया—** णं सउन्तलाए सोहग्गदेवआ अच्चणीआ ।

ननु शकुन्तलायाः सौभाग्यदेवतार्चनीया ।

**प्रियंवदा—** जुज्जदि ।

युज्यते ।

[ इति तदेव कर्मारभेते ।

---

तस्यानुमतम्, विचार्यमाणे तस्यानुमतमिति मे प्रतिभाति । अपचितानि बलिकर्मपर्याप्तानि कुसुमानि, तत् गच्छाव इत्यर्थः । ननु शकुन्तलायाः सौभाग्यदेवतार्चनीया, तदर्थमपि कुसुमान्यपचेयानीत्यर्थः । सौभाग्यदेवता इन्द्राणी ॥

(नेपथ्ये)

अयमहं भोः ।

**अनसूया**— (कर्णं दत्त्वा) सहि, अदिहीणं विअ णिवेदिदं ।

सखि, अतिथीनामिव निवेदितम् ।

**प्रियंवदा**— णं उडजसण्णिहिदा सउन्दला ।

ननूटजसंनिहिता शकुन्तला ।

**अनसूया**— अज्ज उण हिअएण असण्णिहिदा ।

अद्य पुनर्हृदयेनासंनिहिता ।

**प्रियंवदा**— होदु । अलं एत्तिएहिं कुसुमेहिं ।

भवतु । अलमेतावद्भिः कुसुमैः ।

[इति प्रस्थिते ।

(पुनर्नेपथ्ये)

आः अतिथिपरिभाविनि,

---

ननूटजसंनिहिता शकुन्तला, शून्ये खल्वेवं निवेदनीयमित्यर्थः । असंनिहितप्रायेत्याह— अद्येति । हृदयेनासंनिहिता, भर्तृगतहृदया किमपि न जानातीत्यर्थः । अलमेतावद्भिः कुसुमैः, तत्र गच्छाव इत्यर्थः ॥

आ इति क्रोधानुभावः । परिभवः अनादरः ॥

विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि स-
न्कथां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥

**प्रियंवदा**—हद्धी हद्धी । तं एव्व संवुत्तं। कस्सिं वि पूआरुहे अवरद्धा सुण्णहिअआ सउन्दला। (पुरोऽवलोक्य) ण हु जस्सिं कस्सिं वि । एसो दुव्वासो सुळहकोवो महेसी, तह सविअ चडुळुप्फुळ्ळदुव्वारए गईए सण्णिवुत्तो । को अण्णो हुदवहादो दहिदुं पहवदि ।

हा धिक्, हा धिक् । तदेव संवृत्तम् । कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला । न खलु यस्मिन्कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षिः, तथा शप्त्वा चटुलोत्फुल्लदुर्वारया गत्या संनिवृत्तः । कोऽन्यो हुतवहाद्दग्धुं प्रभवति ।

---

विचिन्तयन्तीति । हेतौ शता । तपोनिधिं न यं कंचनाभ्यागतम् । बोधितः स्मारितः ।

तदेव संवृत्तम्, यद्वितर्कितं तदेव । चटुला चपला, उत्फुल्ला उद्धता ॥

**अनसूया—** गच्छ । पादेसु पणमिअ णिवत्तेहि णं जाव अहं अग्घोदअं उवकप्पेमि ।

गच्छ । पादयोः प्रणम्य निवर्तयैनम् । यावदहमर्घ्योदकमुपकल्पयामि ।

**प्रियंवदा—** तह ।

तथा । [इति निष्क्रान्ता ।

**अनसूया—** ( पदान्तरे स्खलितं निरूप्य ) अम्हो आवेअक्खलिदाए पब्भट्ठं मे अग्गहत्थादो पुप्फभाअणं ।

अहो आवेगस्खलितायाः प्रभ्रष्टं ममाग्रहस्तात्पुष्पभाजनम् । [इति पुष्पोच्चयं रूपयति ।

(प्रविश्य)

**प्रियंवदा—** सहि, पकिदिवक्को सो कस्स अणुणअं गेण्हदि । किं वि उण साणुक्कोसो किदो ।

सखि, प्रकृतिवक्रः स कस्यानुनयं गृह्णाति । किमपि पुनः सानुक्रोशः कृतः ।

**अनसूया—** ( सस्मितम् ) तस्सि बहुदरं तं वि । कहेहि कहेहि ।

---

अम्हो इति प्राकृतेऽव्ययम्, इह विषादद्योतकम् । प्रकृतिवक्रः कुटिलहृदयः । कस्य सोऽनुनयं गृह्णाति, ममानुनयं न प्रत्यग्रहीदित्यर्थः । अनुक्रोशः दया ॥

तस्मिन्बहुतरं तदपि । कथय कथय ।

**प्रियंवदा**— जदा अणुणीदो णिवत्तिदुं ण इच्छदि, तदा विण्णविदो मए-- 'भअवं, तुए पुव्वभत्तिं पेक्खिअ अविण्णादतवप्पहावस्स दुहिदुजणस्स एक्को अवराहो मरिसिदव्वो' त्ति ।

यदानुनीतो निवर्तितुं नेच्छति, तदा विज्ञापितो मया--- 'भगवन्, त्वया पूर्वभक्तिं प्रेक्ष्याविज्ञाततपःप्रभावस्य दुहितृजनस्यैकोऽपराधो मर्षितव्यः' इति ।

**अनसूया**— तदो तदो ।

ततस्ततः ।

**प्रियंवदा**— तदो 'मे वअणं अण्णहाभविदुं ण अरुहदि । किंदु अहिण्णाणदंसणेण सावो णिवत्तिस्सदि' त्ति मन्तअन्तो एव्व अन्तरिहिदो ।

ततः 'मे वचनमन्यथाभवितुं नार्हति, किंत्वभिज्ञान-

---

विज्ञापनप्रकारमाह— भगवन्निति। अत्र पूर्वोपकारीति अज्ञानादिति बालेयमिति एकोऽपराध इति च क्षन्तव्यत्वं व्यज्यते । ततस्ततः, त्वयैवं विज्ञापिते किं कृतं तत्रभवतेत्यर्थः ॥

दर्शनेन शापो निवर्तिष्यते' इति मन्त्रयमाण एवान्तर्हितः ।

**अनसूया**— सक्कं दाणिं अस्ससिदुं । अत्थि तेण राएसिणा संपत्थिदेण सणामहेअङ्किअं अङ्गुळीअअं सुमरणीअंत्ति सअं पिणद्धं । तस्सिं साहीणो उवाओ भविस्सदि ।

शक्यमिदानीमाश्वसितुम् । अस्ति तेन राजर्षिणा संप्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम् । तस्मिन्स्वाधीन उपायो भविष्यति ।

**प्रियंवदा**— सहि, एहि । देवकज्जं दाव णिव्वत्तह्म ।

सखि, एहि । देवकार्यं तावन्निर्वर्तयावः ।

[इति परिक्रामतः ।

**प्रियंवदा**— ( विलोक्य ) अणसूए, पेक्ख दाव वामहत्थोवणिहिदवअणा आलिहिदा विअ पिअसही । भत्तुगदाए चिन्ताए अत्ताणं वि ण एसा विभावेदि । किं

---

मन्त्रयमाण एवान्तर्हितः, न मे पुनर्वचनावकाशोऽभूदित्यर्थः । अलमेतावतेत्याह— शक्यमिति । कुत इत्याह— अस्ति तेनेति । संप्रस्थितेन, आदिकर्मणि क्तः । पिनद्धम् अङ्गुलौ न्यस्तम् । तस्मिन्, निमित्ते सप्तमी ॥

उण आअन्तुअं ।

अनसूये, पश्य तावत् वामहस्तोपहितवदनामालिखितामिव प्रियसखीम् । भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति । किं पुनरागन्तुकम् ।

**अनसूया**— पिअंवदे, दुवेणं एव्व अम्हाणं मुहे एसो वुत्तन्तो चिट्ठदु । रक्खणीआ क्खु पकिदिपेलवा पिअसही ।

प्रियंवदे, द्वयोरेवावयोर्मुख एष वृत्तान्तस्तिष्ठतु । रक्षणीया खलु प्रकृतिपेलवा प्रियसखी ।

**प्रियंवदा**— को दाणिं उण्होदएण णोमालिअं सिञ्चेदि ।

क इदानीमुष्णोदकेन नवमालिकां सिञ्चति ।

[इत्युभे निष्क्रान्ते ।

## प्रवेशकः ।

---

एष वृत्तान्तस्तिष्ठतु, शकुन्तलायै न निवेदयितव्यः । कुत इत्याह— रक्षणीयेति । यदि सा श्रोष्यति, तर्हि सद्यो विपद्येतेति भावः । क इदानीमुष्णोदकेन नवमालिकां सिञ्चति, उष्णोदकेन नवमालिकासेक इव तस्यै शापनिवेदनम्, अतो न निवेदयामीति भावः । प्रवेशकः । यदुक्तम्— 'तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः । प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः' इति ॥

(ततः प्रविशति सुप्तोत्थितः शिष्यः ।)

**शिष्यः**— वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासादुपावृत्तेन काश्यपेन । प्रकाशं निर्गतस्तावदवलोकयामि—कियदवशिष्टं रजन्या इति । (परिक्रम्यावलोक्य च) हन्त प्रभातम् । तथा हि—

**यात्येकतोऽस्तशिखरं पतिरोषधीना-**
**माविष्कृतारुणपुरःसर एकतोऽर्कः ।**

---

गान्धर्वं परिणयनं परिणेतुर्गमनमात्मनगराय । मुद्रार्पणं प्रयाणे शापो दुर्वाससस्तस्याः ॥ तस्य तु मोक्षोपायस्तयोरसंवेदनं शकुन्तलायाः । एतानि सूचितानि ह्यङ्कात्पूर्वं प्रवेशकेनेह ॥ अधुना कण्वस्य मुनेरागमनं श्रवणमात्मकन्यायाः । परिणयनादेस्तस्या भर्तृगृहप्रेषणारम्भः । इत्येतान्यङ्कमुखे शिष्येण सखीभ्यां च सूच्यन्ते— **तत इति** ॥

वेलायाः कालस्य । उपलक्षणार्थम् उपलक्ष्य ज्ञानाय । प्रवसत्यस्मिन्निति प्रवासो देशान्तरम् । प्रकाशे तर्वाद्यनावृते देशे । निर्गतः अवलोकयामि, अवलोक्यावगच्छामि । अवशिष्टम् अवशेषः । हन्तेति हर्षे । प्रभातम्, वर्तत इति शेषः ॥

उक्तमुपपादयति— **तथा हीत्यादिना** । एकतः प्रतीच्यां दिशि । ओषधीनां पतिः चन्द्रः । अस्तशिखरम् अस्तगिरिशृङ्गम् । याति । एकतः प्राच्यां दिशि । अर्कः । आविष्कृतारुणपुरःसरः ।

तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ २ ॥

अपि च--

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि ॥ ३ ॥

---

भवतीति शेषः । आविष्कृतः प्रकाशितः अरुणनामा पुरःसरः सारथिर्येन सः आविष्कृतारुणपुरःसरः । अत्रास्तशिखरयानारुणाविष्करणाभ्यामस्तमयोदयारम्भ उक्तः । व्यसनोदयाभ्यामिति तयोरनूद्देशः । आत्मदशान्तरेषु स्वावस्थाविशेषेषु आपत्संपल्लक्षणेषु । नियम्यत इवेति । एवं भगवतोः प्रपञ्चप्रवर्तकयोः सोमसूर्ययोरप्येकस्यापद्यन्यस्य संपत्, एकस्य संपद्यन्यस्यापत् । अतः पर्यायेण प्रवर्तमानयोरापत्संपदोर्विषादहर्षाभ्यां वैवश्यं मा भूदिति नियम्यत इवेत्यर्थः । यदुक्तम्-- 'आत्मानं शोकहर्षाभ्यां शत्रुभ्यां नावसादयेत्' इति ॥

**अन्तर्हित इति ।** सेत्यनुभूतार्थविषयः । संस्मरणीया, पूर्वमनुभूतत्वात् तदानीमविद्यमानत्वाच्च । अर्थान्तरन्यासः, तत्समर्थ्यवाक्यगता समासोक्तिश्च; कुमुद्वतीति लिङ्गविशेषनिर्देशगर्भेण कार्योपनि-

(प्रविश्यापटीक्षेपेण)

**अनसूया—** एवं अ णाम विसअपरम्मुहस्स जणस्स एदं ण विदिअं। तह वि तेण रण्णा सउन्दलाए अणज्जं आअरिदं।

एवं च नाम विषयपराङ्मुखस्य जनस्यैतन्न विदितम्। तथापि तेन राज्ञा शकुन्तलायामनार्यमाचरितम्।

**शिष्यः—** यावदुपस्थितां होमवेलां गुरवे निवेदयामि।

[इति निष्क्रान्तः।

---

बन्धेनोत्थापितया समासोक्त्या समारोपितनायकव्यवहारयोः कुमुद्वतीशशिनोर्वृत्तान्तो विशेषरूपोऽत्राबलाशब्दस्येष्टशब्दस्य च सामान्यवाचित्वात्सामान्येन समर्थ्यते। अत्रोपक्षेप्यः शकुन्तलावृत्तान्तो ध्वन्यते॥

सुप्तोत्थितानसूया राज्ञ उपेक्षां शकुन्तलाविषयाम्। अनुचिन्त्य दूयमाना ब्रवीति— **एवं च नामेति**। अत्रैवं च नामेति इष्टप्रवासेत्यादित्राक्यार्थस्यानुवादरूपतया प्रतीयते। नास्त्यधर्मोऽयम् अनसूयाप्रवेशावकाशदानार्थः। एवं च नामेत्यव्ययसमुदायोऽनुवादद्योतकः। यद्यपि विषयपराङ्मुख्यहं विषयिजनवृत्तं न जानामि; तथाप्येतावज्जानामीत्यर्थः। किं तदित्याह— तेनेत्यादि। अनार्यं निन्द्यम्। प्रकृतमनुसंधायाह— **यावदिति**। प्रतिबुद्धापि किं करिष्यामि, प्रसुप्तेव किमपि कर्तुं न

**अनसूया**— पडिबुद्धा वि किं करिस्सं । उइदेसु वि करणिज्जेसु हत्थपाआ ण प्पसरन्ति । कामो दाणिं सकामो होदु । जेण असच्चसंधे जणे सुण्णहिअआ सही पदं कारिदा । अहवा दुव्वाससो कोवो एसो विअरेदि । अण्णहा कहं सो राएसी तारिसं णिमन्तिअ एत्तिअस्स कालस्स लेहमेत्तं वि ण विसज्जेदि । ता इदो अहिण्णानं अङ्गुळीअअं से विसज्जेम । दुक्खसीळे तवस्सिजणे को अब्भत्थीअदि । ण अ सहीगामी दोसो त्ति ववसिदा वि ण पारेमि पवासपडिणिउत्तस्स तादकस्सवस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्दलं णिवेदेदुं । इत्थं गदे किं णु खु करणिज्जं ।

प्रतिबुद्धापि किं करिष्यामि । उचितेष्वपि करणीयेषु हस्तपादं न प्रसरति । काम इदानीं सकामो भवतु । येनासत्यसंधे जने शून्यहृदया सखी पदं कारिता । अथवा दुर्वाससः कोप एष विकरोति । अन्यथा

---

पारयामीत्यर्थः । कुत इत्याह—उचितेषु अभ्यस्तेष्वपि । काम इदानीं सकामो भवतु, वल्लभारमणयोर्वियोगो हि कामस्याभिमतः । पदं कारिता अवतारिता । अथवा, नायं तस्य दोष इत्यर्थः । किं तर्हीत्याह—

कथं स राजर्षिस्तादृशं निमन्त्र्य एतावतः कालस्य लेखमात्रमपि न विसृजेत् । तस्मादितोऽभिज्ञानमङ्गुलीयकमस्मै विसृजामः । दुःखशीले तपस्विजने कोऽभ्यर्थ्यते । न च सखीगामी दोष इति व्यवसितापि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम् । इत्थंगते किं नु खलु करणीयम् ।

( प्रविश्य )

**प्रियंवदा**— (सहर्षम्) तुवरेदु तुवरेदु सही सउन्दलाए

---

दुर्वाससः कोप एष विकरोति । कोपेन शापो लक्ष्यते; शापस्यायं विकार इत्यर्थः । उक्तं द्रढयति— अन्यथेति । तादृशम्, यद्वक्ष्यति—'एकैकम्—' इत्यादि । शापमोक्षोपायमाह— तस्मादिति । अभिजानात्यनेनेत्यभिज्ञानम् । तस्य कश्चित्प्रेष्यो नेत्याह— दुःखशीले विरसस्वभावे, कोऽपि नार्थनीय इत्यर्थः । अतस्तातस्यावस्थानिवेदनमत्र कर्तव्यम्, तस्यापि नायमवसर इत्याह— न चेति । दोषः स्वातन्त्र्यलक्षणः ; यदुक्तम्— 'पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति' इति । न च सखीगामी, गान्धर्वस्य राजर्षिप्रतियोगिकत्वात् । आपन्नसत्त्वां गर्भिणीम् । 'आपन्नसत्त्वा गुर्वी स्यादन्तर्वत्नी च गर्भिणी' इत्यमरः । इत्थंगते किं नु खलु करणीयम्, प्रतिपत्तिमूढास्मीत्यर्थः । कौतुकं

पत्थाणकोदुअं णिव्वत्तिदुं ।

त्वरतां त्वरतां सखी शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम ।

**अनसूया**— सहि, कहं एदं ?

सखि, कथमेतत् ?

**प्रियंवदा**— सुणाहि । दाणिं सुहसइदपुच्छिआ सउन्दलासआसं गदम्हि ।

शृणु । इदानीं सुखशयितपृच्छिका शकुन्तलासकाशं गतास्मि ।

**अनसूया**— तदो तदो ।

ततस्ततः ।

**प्रियंवदा**— दाव णं लज्जावणदमुहिं परिस्सजिअ तादकस्सवेण एव्वं अहिणन्दिअं— दिट्ठिआ धूमावरुद्धदिट्ठिणो वि यजमाणस्स पावए एव्व आहुदी णिपडिदा। वच्छे, सुसिस्सपरिदिण्णा विज्जा विअ असोअणिज्जा मह संवुत्ता। अज्ज एव्व इसिपरिगहीदं तुमं भत्तुणो सआसं विसज्जेमि त्ति ।

---

मङ्गलम् । 'अथ कौतुकम् कौतूहले मङ्गले च' इति भोजः । प्रस्थानसंभावनां पृच्छति— कथमेतत् ॥

तावदेनां लज्जावनतमुखीं परिष्वज्य तातकाश्यपेनैवमभिनन्दितम्—'दिष्ट्या धूमावरुद्धदृष्टेरपि यजमानस्य पावक एवाहुतिर्निपतिता । वत्से, सुशिष्यपरिदत्ता विद्येवाशोचनीया मम संवृत्ता । अद्यैव ऋषिपरिगृहीतां त्वां भर्तुः सकाशं विसृजामि' इति ।

**अनसूया**— अह केण आचक्खिदो अअं तादकस्सवस्स वुत्तन्तो ?

अथ केन आख्यातोऽयं तातकाश्यपाय वृत्तान्तः ?

**प्रियंवदा**— अग्गिसरणं पविट्ठस्स छन्दोवदीए वाआए ।

अग्निशरणं प्रविष्टस्य छन्दोवत्या वाचा ।

**अनसूया**— कहेहि कहेहि । कथय कथय ।

**प्रियंवदा**— (संस्कृतमाश्रित्य)

**दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।**
**अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ४ ॥**

---

अभिनन्दनप्रकारमाह; अदत्तापि मया मत्सुता मया संकल्पितमेव वरं गतवतीत्यत्र प्रस्तुतसदृशान्तरेणाह— दिष्ट्येति । भर्तुः सकाशं विसृजामि, प्रतीत्यर्थात् । शरणं गृहम् । छन्दः वृत्तम् । वाचा अर्थादशरीरिण्या ॥

वाचः स्वरूपमाह— दुष्यन्तेनेति । अग्निगर्भा शमीति प्रसि-

**अनसूया**— ( प्रियंवदामाश्लिष्य ) सहि, पिअं मे । किंदु अज्ज एव्व सउन्दला णीअदित्ति उक्कण्ठासाहारणो मे परितोसो ।

सखि, प्रियं मे । किं त्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणो मे परितोषः ।

**प्रियंवदा**— सहि, वअं दाव उक्कण्ठं विणोदइस्सामो । सा दाव तवस्सिणी णिव्वुदा होदु ।

सखि, आवां तावदुत्कण्ठां विनोदयिष्यावः । सा तावत्तपस्विनी निर्वृता भवतु ।

**अनसूया**— सहि, एदस्सिं चूदसाहावलम्बिदे णालिएरसमुग्गए तण्णिमित्तं एव्व कालान्तरक्खमा णिक्खित्ता मए केसरमालिआ । तं तुमं हत्थसण्णिहिदं करेहि । जाव अहं से गोरोअणा तित्थमित्तिआ दुव्वाकिसलआणित्ति मङ्गलसमालम्भणाणि विरएमि ।

सखि, एतस्मिंश्चूतशाखावलम्बिते नालिकेरसमुद्गके

---

द्धिः ; यथा—'शमीमिवाभ्यन्तरलीनपावकाम्' इति ॥

उत्कण्ठासाधारणः उत्कण्ठास्वीकृतैकांशः । तपस्विनी, 'तपस्विनौ दीनतापसौ' इति वैजयन्ती । नालिकेरसमुद्गके नालिकेरकपालरचिते संपुटके । 'समुद्गकः संपुटकः' इत्यमरः । तन्निमित्तं

तन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका । तां त्वं हस्तसंनिहितां कुरु । यावदहमस्या गोरोचना तीर्थमृत्तिका दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि ।

**प्रियंवदा—** तह करीअदु ।

तथा क्रियताम् ।

[अनसूया निष्क्रान्ता । प्रियंवदा नाट्येन सुमनसो गृह्णाति ।

(नेपथ्ये)

क्व ते शार्ङ्गरवमिश्राः ?

**प्रियंवदा—** (कर्णं दत्त्वा) अणसुए, तुवरेसु तुवरेसु । एदे क्खु हत्थिणउरगामिणो इसीओ सद्दावीअन्ति ।

अनसूये, त्वरस्व त्वरस्व । एते खलु हास्तिनपुरगामिन ऋषयः शब्दाप्यन्ते ।

(प्रविश्य समालम्भनहस्ता)

**अनसूया—** सहि, एहि ।

---

शकुन्तलायाः प्रसाधनार्थम् । कालान्तरयोग्या, वकुलमाला हि पर्युषितापि परिमलं न मुञ्चति । समालम्भनानि मण्डनानि । क्व ते शार्ङ्गरवमिश्राः, शार्ङ्गरवसहिता ऋषयः । शब्दाप्यन्ते आहूयन्ते ॥

सखि, एहि ।

[इति परिक्रामतः ।

**प्रियंवदा**— (विलोक्य) एसा सुज्जोदए एव्व सिहामज्जिदा पडिच्छणीवाराहिं सोत्थिवाअणिकाहिं तावसीहिं अहिणन्दीअमाणा सउन्दला चिट्ठइ । उवसप्पम्ह णं ।

एषा सूर्योदय एव शिखामग्ना प्रतीष्टनीवाराभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । उपसर्पाव एनाम् ।

[इत्युपसर्पतः ।

(ततः प्रविशति यथोद्दिष्टव्यापारासनस्था शकुन्तला ।)

**तापसीनामन्यतमा**— (शकुन्तलां प्रति) पुत्तिआए, भत्तुणो बहुमाणसूअअं महादेवीसद्दं लहेहि ।

पुत्रिके, भर्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व ।

**द्वितीया**— वच्छे, वीरप्पसविणी होहि ।

वत्से, वीरप्रसविनी भव ।

**तृतीया**— जादे, भत्तुणो बहुमदा होहि ।

जाते, भर्तुर्बहुमता भव ।

[इत्याशिषो दत्त्वा गौतमीवर्जं निष्क्रान्ताः ।

---

शिखामग्ना सशिरस्कं स्नाता । प्रतीष्टाः प्रतिगृहीताः ।

**सख्यौ**— ( उपसृत्य ) सहि, सुमज्जणं दे होदु ।

सखि, सुमज्जनं ते भवतु ।

**शकुन्तला**— साअदं मे सहीणं । इदो णिसीदह ।

स्वागतं मे सख्योः । इतो निषीदतम् ।

**उभे**— (मङ्गलपात्राण्यादाय उपविश्य) हला सउन्दले, सज्जा होहि । जाव दे मङ्गळसमाळम्भणाइ विरएम ।

हला शकुन्तले, सज्जा भव । यावत्ते मङ्गलसमालम्भनानि विरचयावः ।

**शकुन्तला**— उइदं वि बहु मन्तव्वं । दुळ्ळहं दाणिं मे सहीमण्डणं भविस्सदि ।

उचितमपि बहु मन्तव्यम् । दुर्लभमिदानीं मे सखीमण्डनं भविष्यति । [इति बाष्पं विसृजति ।

**उभे**— सहि, ण दे उइअं मङ्गळकाळे रोइदुं ।

सखि, न ते उचितं मङ्गलकाले रोदितुम् ।

[इत्यश्रूणि प्रमृज्य नाटयेन प्रसाधयतः ।

**प्रियंवदा**— आहरणोइदं रूवं अस्समसुळहेहिं पसाहणेहिं विप्पअरीअदि ।

---

उचितं परिचितम् । कुत इत्याह—दुर्लभमिति ।

आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रक्रियते ।

(प्रविश्योपायनहस्तौ)

**ऋषिकुमारकौ**— इदमलंकरणजातम् । अलंक्रियतामत्र-भवती ।

[सर्वा विलोक्य विस्मिताः ।

**गौतमी**— वच्छ णारअ, कुदो एदं ?

वत्स नारद, कुत एतत् ?

**प्रथमः**— तातकाश्यपप्रभावात् ।

**गौतमी**— किं माणसी सिट्ठी ?

किं मानसी सृष्टिः ?

**द्वितीयः**— न खलु । श्रूयताम् । तत्रभवता वयमाज्ञप्ताः— शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । तत इदानीम्—

**क्षौमं केनचिदिन्दुपाण्डु तरुणा मङ्गल्यमाविष्कृतं**
**निष्ठ्यूतश्चरणोपयोगसुभगो लाक्षारसः केनचित् ।**

---

प्रसाधनैः अलंकारैः। विप्रक्रियते असाधु क्रियते । जातं समूहः । कुत एतत्, उत्पन्नमिति शेषः । उत्पत्तिप्रकारमाह— श्रूयतामिति । तत इदानीमिति । अस्मासु कुसुमोच्चयोद्युक्तेषु सत्स्वित्यर्थः ॥

अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥

**प्रियंवदा**— (शकुन्तलां विलोक्य) हळा, इमाए अब्भुववत्तीए सूइआ दे भत्तुणो गेहे अणुहोदव्वा राअळच्छी ।

हला, अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीः ।

[शकुन्तला व्रीडां रूपयति ।

**प्रथमः**— गौतम, एह्येहि । अभिषेकावतीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः ।

**द्वितीयः**— तथा ।

[इति निष्क्रान्तौ ।

**सख्यौ**— अए, अणुवजुत्तभूसणो अअं जणो चित्तकम्मपरिअएण अङ्गेसु दे आहरणविणिओअं करेदि ।

---

**क्षौममिति** । मङ्गल्यशब्दो मङ्गलपर्यायः । यथा— 'अमङ्गल्यं शीलं तव भवतु नाम' इति । निष्ठ्यूतः प्रकाशितः । चरणयोरुपयोगाय विनियोगाय सुभगः उचितः । तत्किसलयोद्भेदप्रतिद्वन्द्विभिः तेषामुद्भिन्नैः किसलयैरिवेत्यर्थः । उपमोपक्रमोत्प्रेक्षैषा ॥

अभ्युपपत्तिः अनुग्रहः । अभिषेकावतीर्णाय, जलाशयमित्यर्थात् । चित्रकर्मपरिचयेन देवालयेष्वालेख्यस्त्रीदर्शनात्; आश्रमे

अये, अनुपयुक्तभूषणोऽयं जनश्चित्रकर्मपरिचयेनाङ्गेषु त आभरणविनियोगं करोति ।

**शकुन्तला**— जाणामि तुम्हाणं णेउण्णं ।

जानामि युवयोर्नैपुण्यम् ।

[उभे नाट्येनालंकुरुतः ।

(ततः प्रविशति स्नानोत्तीर्णः काश्यपः ।)

**काश्यपः**—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥

[इति परिक्रामति ।

---

देवतायतनानि सन्ति, 'देवतायतनानां च पूजाः प्रेक्ष्य कृता द्विजैः । ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः' इत्याश्रमवर्णनोक्तेः ॥

अथ कृत्वा स्नानविधिं प्रस्थापयितुं शकुन्तलां गच्छन् । तदधिष्ठितमग्निगृहं सोत्कण्ठः काश्यपः प्राह— **यास्यतीति** । इति हेतौ । उत्कण्ठया वियोगवेदनेन । कण्ठः स्तम्भितबाष्पवृत्तिकलुषः, कण्ठः स्वरः; 'कण्ठः शब्दे गलेऽन्तिके' इति भोजः । स्तम्भितया बाष्पवृत्त्या कलुषः अस्पष्टः, गद्गद इति यावत् । चिन्तया

**सख्यौ**— हळा सउन्दले, अवसिदमण्डणासि । परिधेहि संपदं खोमजुअळं ।

हला शकुन्तले, अवसितमण्डनासि । परिधत्स्व सांप्रतं क्षौमयुगुलम् ।

[शकुन्तलोत्थाय परिधत्ते ।

**गौतमी**— जादे, एसो दे आणन्दसन्दिणा चक्खुणा परिस्सजन्तो विअ गुरू उवट्ठिदो । आआरं दाव पडिवज्जस्स ।

जाते, एष त आनन्दस्यन्दिना चक्षुषा परिष्वजमान इव गुरुरुपस्थित: । आचारं तावत्प्रतिपद्यस्व ।

**शकुन्तला**— (सव्रीडम् ) ताद, वन्दामि ।

तात, वन्दे ।

**काश्यपः**— वत्से,

**ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।**

---

जडम् अलब्धलक्षम् । मम तावत् ममापि । कथं नु पीड्यन्ते, सुतरां पीड्यन्त इत्यर्थः । गृहिणः गृहस्थाः । अत्र प्राकरणिकान्मुनिवृत्तान्तादप्राकारणिको गृहस्थवृत्तान्तोऽर्थादापततीत्यर्थापत्तिरलंकारः; 'दण्डापूपिकयार्थान्तरापतनमर्थापत्तिः' इति ॥

आशिषं प्रयुङ्क्ते— **ययातेरिति** ।

सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ६ ॥

**गौतमी—** भअवं, वरो क्खु एसो, ण आसिसा ।

भगवन्, वरः खल्वेषः, नाशीः ।

**काश्यपः—** वत्से, इतः सद्योहुतानग्नीन्प्रदक्षिणीकुरुष्व ।

[सर्वे परिक्रामन्ति ।

**काश्यपः—**(ऋक्छन्दसाशास्ते ।)

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पावयन्तु ॥ ७ ॥

प्रतिष्ठस्वेदानीम् । (सदृष्टिक्षेपम्) क्व ते शार्ङ्गरवमिश्राः ?

(प्रविश्य)

**शिष्याः—** भगवन्, इमे स्मः ।

**काश्यपः—** भगिन्यास्ते मार्गमादेशय ।

---

अभीष्टप्रार्थनं ह्याशीः, तस्य विधिर्वरः; एतदेवं भविष्यतीति भावः । सद्यः सांप्रतम् । हुतान् ज्वलतः ॥

**अमी इति ।** वेदिं षष्ठ्यर्थे द्वितीया । धिष्ण्यं स्थानम् ॥

**शार्ङ्गरवः**— इत इतो भवती ।

[सर्वे परिक्रामन्ति ।

**काश्यपः**— हंहो संनिहितदेवतास्तपोवनतरवः,

**पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या**
**नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।**
**आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः**
**सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥**

( कोकिलरुतं सूचयित्वा )

आः—

**अनुमतगमना शकुन्तला**
**तरुभिरियं वनवासबन्धुभिः ।**
**परभृतविरुतं कलं यथा**
**प्रतिवचनीकृतमेभिरीदृशम् ॥ ९ ॥**

---

हंहो इति हे इत्यस्यार्थे । **पातुमिति** । तरूणां कुसुमप्रसूतेः प्रत्येकमृतुनियमादाद्यत्वम् । सेयं या युष्मास्वेवं पुत्रवात्सल्यवती । तस्यै गमनानुज्ञा क्रियताम् ॥

आ इति वितर्के । **अनुमतेति** । यथेति यस्मादर्थे । अत्र तरुषु बन्धुजनत्वं परभृतविरुते प्रतिवचनत्वं चारोप्यत इति रूपकम् ।

( आकाशे )

रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ १० ॥

[ सर्वे सविस्मयमाकर्णयन्ति ।

**गौतमी**— जादे, णादिजणसिणिद्धाहिं अणुण्णादगमणासि तवोवणदेवदाहिं । पणम भअवदीणं ।

जाते, ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः । प्रणम भगवतीनाम् ।

**शकुन्तला**— (सप्रणामं परिक्रम्य, जनान्तिकम्) हळा पिअंवदे, अज्जउत्तदंसणुस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खदुक्खेण मे चळणा पुरदोमुहा वट्टन्ति ।

---

परभृतविरुतरूपप्रतिवचनेन तरुरूपबन्धुजनगमनानुज्ञानुमीयत इत्यनुमानं च; 'अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः' इति ॥

स्नेहादध्वपरिश्रममाशङ्क्याह— **रम्येति** । कमलिन्या निरन्तरं व्याप्तया हरितैः श्यामैः । मध्ये मध्ये नलिन्यः सन्त्विति भावः । छायाप्रधाना द्रुमाः छायाद्रुमाः । शिवः सुशकुनत्वान्मङ्गलः ॥

हला प्रियंवदे, आर्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखदुःखेन मे चरणौ पुरतोमुखौ वर्तेते ।

**प्रियंवदा**— ण केवळं तवोवणविरहकादरा सही एव्व । तुए उवहिदविओअस्स तवोवणस्स वि एसा समवत्था दीसइ ।

न केवलं तपोवनविरहकातरा सख्येव । त्वयोपहितवियोगस्य तपोवनस्याप्येषा समवस्था दृश्यते ।

**उग्गळिअदब्भकबळा**
**मिइओ परिच्चत्तणच्चणा मोराओ ।**
**ओसरिअत्पाण्डुपत्ता**
**मुअन्ति अस्सूणि विअ वणळदाओ ॥ ११ ॥**

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव वनलताः ॥

---

उपहितः उपगतः । एषा विरहकातरा ॥

उक्तमुपपादयति— उद्गलितेति । काचिदार्येयम् । अत्र वनलतारूपबन्धुस्त्रियो गलत्पाण्डुपत्रापदेशेनाश्रूणि मुञ्चन्तीवेत्युत्प्रेक्षा समासोक्तिरपह्नुतिश्च ॥

**शाकुन्तला**— (स्मृत्वा) ताद, लदाबहिणिअं वणजोसिणिं दाव आमन्तइस्सं ।

तात, लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये ।

**काश्यपः**— अवैमि ते तस्यां सोदर्यस्नेहम् । इयं तावद्दक्षिणेन ।

**शाकुन्तला**— (लतामुपेत्य) वणजोसिणि, चूदसंगदा वि पच्चालिङ्ग मं इदोगदाहिं साहाबाहाहिं । अज्जप्पहुदि दूरवत्तिणी भविस्सं ।

वनज्योत्स्ने, चूतसंगतापि प्रत्यालिङ्ग मामितोगताभिः शाखाबाहाभिः । अद्यप्रभृति दूरवर्तिनी भविष्यामि ।

**काश्यपः**—

संकल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
चूतेन संगतवती नवमालिकेय-
मस्यामहं च त्वयि संप्रति वीतचिन्तः ॥

---

**बाहाभिः** बाहुभिः ॥

**संकल्पितमिति** । एवेति भिन्नक्रमः— संकल्पितमेवेति ।

इतः पन्थानं प्रतिपद्यस्व ।

**शकुन्तला**— (सख्यौ प्रति) हळा, एसा दुवेणं वो हत्थणिक्खेवो ।

हला, एषा द्वयोर्वां हस्तनिक्षेपः ।

**सख्यौ**— अअं जणो दाणिं कस्स हत्थे समप्पिदो ।

अयं जन इदानीं कस्य हस्ते समर्पितः ।

[इति बाष्पं विकिरतः ।

**काश्यपः**— अनसूये, अलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

[सर्वे परिक्रामन्ति ।

**शकुन्तला**— ताद, एसा उडजपज्जन्तचारिणी गब्भमन्थरा मिअवहू जदा अणघप्पसवा, तदा कंपि पिअणिवेदइत्तअं विसज्जेहि ।

तात, एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदानघप्रसवा, तदा कमपि प्रियनिवेदयितारं विसृज ।

**काश्यपः**— नेदं विस्मरिष्यामः ।

---

निक्षेपः, सावधानं रक्षणीयेति भावः । अयं जनः आवाम् । गर्भमन्थरा गर्भेण मन्थरा, मन्दसंचारिणी ॥

 


**शकुन्तला—** ( गतिभङ्गं रूपयित्वा ) किं णु खु विडविविड-वन्तो विअ णिवसणे मे सज्जइ । [इति परावर्तते ।

किं नु खलु विटपिविटपान्त इव निवसने मे सज्जते ।

**काश्यपः—** वत्से,

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १३ ॥

**शकुन्तला—** वच्छ, किं सहवासपरिच्चाइणिं मं अणिच्छसि । अचिरप्पसूदाए जणणीए विणा वड्ढिदो एव्व । दाणिं वि मए विरहिदं तुमं तादो चिन्तइस्सदि णिवत्तेहि दाव । [इति रुदती प्रस्थिता ।

वत्स, किं सहवासपरित्यागिनीं मामन्विच्छसि । अचिरप्रसूतया जनन्या विना वर्धित एव । इदानी-

---

**यस्येति ।** विरोपणं शोषणम् । कुशसूचिविद्धे दर्भाङ्कुरक्षते । श्यामाकेति । अनुकम्पायां कः । मुष्टिपरिमितैः श्यामाकसस्यैः संवर्धितः । पुत्रकृतकः कृतकपुत्रः ।

किं सहवासपरित्यागिनीं माम् अन्विच्छसि, त्वदुपरि निःस्नेहां

मपि मया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्तस्व तावत् ।

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया विहतानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १४ ॥

**शार्ङ्गरवः**— भगवन्, नोदकान्तात्स्निग्धो जनोऽनुगन्तव्य इति श्रूयते । तदिदं सरस्तीरम् । अत्र संदिश्य प्रतिगन्तुमर्हसि ।

---

मां कथं स्निह्यसि इति भावः । वर्धित एव, मयेति शेषः । अचिरेति, त्वां प्रसूय पुनरचिरात् प्रसूतया । कर्तरि क्तः । स्तन्यपानादिकं विनेत्यर्थः । जननीवियोगे तवाहं शरणम्, इदानीं मद्वियोगे तव तातः शरणमस्ति, तस्मान्निवर्तस्वेति भावः ॥

**उत्पक्ष्माणोरिति** । त्वं स्थिरतया धैर्येण बाष्पं विहतानुबन्धं कुरु विहतोऽनुबन्धो अनुप्रसरो यस्य । उत्पक्ष्मणोः पक्ष्मलयोः । अनेन बाष्पस्य गलनाभावो व्यज्यते । नयनयोः उपरुद्धवृत्तिं उपरुद्धा वृत्तिः रूपलक्षणविषयप्रवृत्तिः येन । कुत इत्याह— अस्मिन्निति । पदानि पदविन्यासाः ॥

**नोदकान्तादिति** । स्निग्धः जनः उदकान्तात् उदकसमीपात् न

**काश्यपः—** तेन हीमां क्षीरवृक्षच्छायामाश्रयामः ।

[ सर्वे परिक्रम्य स्थिताः ।

**काश्यपः—** ( आत्मगतम् ) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम् । [ इति चिन्तयति ।

**शकुन्तला—** ( जनान्तिकम् ) हळा, पेक्ख । णळिणीपत्तमेत्तन्तरिदं वि सहअरं अपेक्खन्ती आदुरा चक्कवाई आरसदि । दुक्करं खु अहं करेमि ।

हला, पश्य, नलिनीपत्रमात्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारसति । दुष्करं खल्वहं करोमि ।

**अनसूया—** सहि, मा एव्वं मन्तेहि ।

एसा वि पिएण विणा
गमेइ रअणिं विसाअदीहअरं ।

---

अनुगन्तव्यः, यावदुदकसमीपमेव अनुगन्तव्यः, उदकसमीपान्निवर्तितव्यमिति भावः । यथा अनर्घराघवे 'ततश्चोदकान्तिकनिवर्तितानुयात्रिकबन्धुवर्गः' इति । अत्र, स्थित्वेत्यर्थात् । क्षीरप्रधानो वृक्षः क्षीरवृक्षः वटः । पद्मपत्रतिरोहितं दयितं प्रति क्रन्दन्तीं चक्रवाकीं दृष्ट्वा आह— हलेति । दुष्करं खल्वहं करोमि, तत् यामि । दुष्करं चिरवियोगवेदनासहनम् ॥

गुरुअं वि विरहदुक्खं
आसाबन्धो सहावेदि ॥ १५ ॥

सखि, मैवं मन्त्रयस्व ।

एषापि प्रियेण विना
गमयति रजनीं विषाददीर्घतराम् ।
गुर्वपि विरहदुःख-
माशाबन्धः साहयति ॥

**काश्यपः**— (विचिन्त्य) शार्ङ्गरव, इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः ।

**शार्ङ्गरवः**— आज्ञापयतु भवान् ।

**काश्यपः**—

**अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-**
**स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।**

---

सखि, मा एवं मन्त्रयस्व, सुकरमेवेत्यर्थः ॥

चक्रवाक्यत्रोदाहरणमित्याह— **एषापीति** । कुत इत्याह— **गुर्वपीति** । साहयति सुसहं करोति ॥

विचिन्त्य अवधार्य, आह— **इतीति** । इतीति वक्ष्यमाणपरामर्शि । पुरस्कृत्य अग्रतः कृत्वा ॥

A. 12

**सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया**
**भाग्यायत्तमतःपरं न खलु तद्वाच्यं वधूबन्धुभिः ॥**

---

शापमजानंस्तद्धेतुकं राज्ञः शकुन्तलाविस्मरणं वस्तुवृत्तविचाराभावनिमित्तोपेक्षेयमिति मन्वानः, तन्निवृत्त्यर्थं स्वीकारयोग्यताहेतुविचारपुरःसरं तस्याः स्वीकारं संदिशति— **अस्मानिति** । अस्मान् पितृत्वेन संबन्धिनः । विचिन्तनस्य साधुत्वं वस्तुवृत्तपरामर्शित्वम् । विचिन्त्य अवधार्य । संयमधनान्, वयं निर्धना इति नावमन्तव्या इति भावः । संयमे धनत्वारोपणेनार्जनरक्षणतात्पर्यं व्यज्यते, तेन तत्प्राचुर्यम्, तेन निग्रहानुग्रहसामर्थ्यं च । उच्चैः उन्नतम् । कथमपि केनाप्यनिर्देश्येन हेतुना । अबान्धवकृतां अकृत्रिमाम् । तां त्वयानुभूताम् । प्रतिपत्तिः बहुमानः । दृश्या, अत्र योग्यता तावत्तैवानुपयोगाद्विधिरूपेण परिणमति— दारसामान्यप्रतिपत्त्यावेक्षस्वेति । त्वं सम्यग्विचार्यास्माकं संयमधनत्वम्, आत्मनः कुलस्यौन्नत्यम्, अस्याः स्नेहप्रवृत्तेरकृत्रिमत्वं चावधार्यैनां दारसामान्यपदे स्थापय । गजनिमीलिकयैतत्सर्वमजानन्नेनां मावमंस्था इत्यर्थः । एवं तस्या दारसामान्यप्रतिपत्त्या दर्शनमुक्त्वा, अवश्यवक्तव्यस्य विवक्षितस्य दारविशेषप्रतिपत्त्या दर्शनस्योक्तिर्निषिध्यते— भाग्यायत्तमिति । अतः परं दारविशेषप्रतिपत्त्या दर्शनम् । भाग्यायत्तं दैवाधीनम् । वधूबन्धुभिर्न वाच्यमित्यत्र सामान्यादप्रस्तुताद्विशेषः प्रस्तुतं प्रतीयते । अतःपरं भाग्यायत्तम्; तत् वधूबन्धवो वयं न ब्रूम

**शार्ङ्गरवः**— गृहीतः संदेशः ।

**काश्यपः**— वत्से, त्वमिदानीमनुशासनीयासि । वनौकसोऽपि लोकज्ञा वयम् ।

**शार्ङ्गरवः**— न खलु धीमतां कश्चिदविषयो नाम ।

**काश्यपः**— वत्से, सा त्वमितः पतिकुलं प्राप्य,

**शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने**
**भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।**

---

इत्यर्थः । आक्षेपोऽत्रालंकारः; अस्या दाराविशेषप्रतिपत्त्या दर्शनं भाग्यायत्तत्वात् वधूबन्धुत्वेनास्मास्वविश्वासाच्च किमर्थं वयं ब्रूम इति कैमर्थक्यपरामर्शालोचनमत्राक्षेपः । अनेनावश्यवक्तव्यत्वलक्षणो विशेषो द्योत्यते । 'निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया । वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः' इति । इत्यस्यार्थदिङ्मात्रम् ॥

अथैवं संदिश्य तस्याः पतिकुले वर्तनप्रकारमुपदेष्टुमारभते— **वत्से इति** । अनुशासनं हिते प्रेरणम् । वनौकसोऽपि अपरिचितलोका अपि । लोकज्ञाः लोकवृत्तज्ञाः । न खल्विति, प्रज्ञाचक्षुषामपरिज्ञातं किमपि नेत्यर्थः । अनुशास्ति— **वत्से इत्यादि** । 'कुलं निलयवंशयोः' इत्यमरः । गुरून् पत्युः गुरुभूतान् सर्वान् । शुश्रूषस्व स्वयमतन्द्रिता सादरं परिचर । प्रियसखीवृत्तिं कुरु, स्नेहबहुमानविश्वास-

भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥

कथं वा गौतमी मन्यते ?

**गौतमी**— एत्तिओ वहूजणस्स उवदेसो । जादे, एदं क्खु सव्वं ओधारेहि ।

एतावान्वधूजनस्योपदेशः । जाते, एतत्खलु सर्वमवधारय ।

**काश्यपः**— वत्से, परिष्वजस्व मां सखीजनं च ।

---

वती भव । विप्रकृता विमानिता । प्रतीपं प्रतिकूलम् । परिजने भर्तृसंबन्धिनि स्वसंबन्धिनि च । दक्षिणा छन्दानुवर्तिनी । भाग्येषु तत्कार्येषु विभवेषु, निमित्ते सप्तमी । अनुत्सेकिनी, यदुक्तम्— 'कं श्रीर्न दर्पयति' इति । एवं पतिकुले वर्तनप्रकारमुपदिश्य, तस्यावश्यकर्तव्यतां बोधयितुं करणेऽभ्युदयम्, अकरणे प्रत्यवायं चाह— यान्तीति । एवं वर्तमाना इति शेषः । वामाः विरुद्धवर्तिन्यः । आधयः विनाशहेतवः । एवं वर्तमाना त्वं महाराजमहिषीपदे प्रतिष्ठामवाप्स्यसि । नो चेत्, कुलं खलीकरिष्यसीत्यर्थः ॥

**कथं वेति** । गौतम्या एवं वा न वा प्रतिभातीत्यर्थः । एवमेवेत्याह— एतावान् वधूजनस्योपदेशः, उपदेष्टव्यं सर्वमुपदिष्टमित्यर्थः ॥

**शकुन्तला**— ताद, इदो एव्व किं पिअंवदामिस्साओ सहीओ णिवत्तिस्सन्ति ?

तात, इत एव किं प्रियंवदामिश्रे सख्यौ निवर्तिष्येते ?

**काश्यपः**— वत्से, इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गौतमी यास्यति ।

**शकुन्तला**— (पितरमाश्लिष्य) कहं दाणिं तादस्स अङ्कादो परिब्भट्ठा मलअतडुम्मूलिआ चन्दणलदा विअ देसन्तरे जीविअं धारइस्सं ?

कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतटोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्ये ?

**काश्यपः**— वत्से, किमेवं कातरासि ?

**अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे**
**विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।**

---

**इमे इति** । अनयोरपि विवाहकालोऽयम्; अत इत एव निवर्तनमित्यर्थः । कथमिति । उपमया जीवितधारणस्यावश्यमभावो व्यज्यते । वियोगखेदः क्रमेणोपयास्यतीत्याह— **वत्से इति** । एवं कातरा मा भूरित्यर्थः ॥

**अभिजनेति** । अभिजनवतः कुलीनस्य । श्लाघ्ये स्पृहणीये

तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥

[शकुन्तला पितुः पादयोः पतति ।

**काश्यपः**— यदिच्छामि ते तदस्तु ।

**शकुन्तला**— (सख्यावुपेत्य) हळा, दुवे वि मं समं एव्व परिस्सजह ।

हला, द्वे अपि मां सममेव परिष्वजेथाम् ।

**सख्यौ**— (तथा कृत्वा) सहि, जइ णाम सो राआ पच्च-हिण्णाणमन्थरो हवे, तदो से इमं अत्तणामहेअङ्किअं अङ्गुळीअअं दंसेहि ।

सखि, यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्, ततस्तस्येदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय ।

---

प्रधानमहिषीपदे लब्धप्रतिष्ठा । अनेन कृतकृत्यताभिमानो व्यज्यते । विभवैः तत्तदुचितद्रव्यसमृद्धया गुरुभिः मुख्यपक्षैः । कृत्यैः सह क्रियमाणैः प्रतिक्षणं पुङ्खानुपुङ्खतया वर्धमानैः । अचिरात्, इदानीं गर्भिणीत्वात् । उपमया तनयस्य भुवनभरणसामर्थ्यं सदा तदुद्योगश्च व्यज्यते । प्रसूयेति, हेतुभावगर्भम् ॥

एवमभ्यच्छ्रेयःप्रलोभनेन वियोगखेदं विरलीकृत्य गमनमनुजानाति— यदिच्छामि ते तदस्तु, पुनर्दर्शनमित्यर्थः । शापमाशङ्क्य

**शकुन्तला**— इमिणा संदेहेण वो आकम्पिदह्मि ।

अनेन संदेहेन वामाकम्पितास्मि ।

**सख्यौ**— मा भाआहि । सिणेहो पावसङ्की ।

मा भैषीः । स्नेहः पापशङ्की ।

**शार्ङ्गरवः**— युगान्तरमारूढः सविता । त्वरतामत्रभवती ।

**शकुन्तला**— (आश्रमाभिमुखी स्थित्वा) ताद, कदा णु खु भूओ तवोवणं पेक्खिस्सं ।

तात, कदा नु खलु भूयस्तपोवनं प्रेक्षिष्ये ?

**काश्यपः**— श्रूयताम् ।

**भूत्वा चिराय चतुरन्तमहीसपत्नी**
**दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।**

---

तन्मोक्षोपायमुपदिशतः— सखीति । मन्थरः मन्दः ; सविलम्ब इति यावत् । 'मन्थरं मन्दसुन्दरम्' इति वैजयन्ती । स्नेहः पापशङ्की, आवां स्नेहादपायशङ्किन्यौ । युगान्तरं युगपरिमाणम् । अन्तरम् अवकाशम्; प्रस्थानकालोऽतिवर्तत इति भावः ॥

वार्द्धके तवास्मिन्वासो भविष्यतीत्याह— **भूत्वेति** । चत्वारोऽन्ता अवधयो यस्याः, सागरपर्यन्ताया इत्यर्थः । निवेश्य, निवेशो विवाहः । यथा भारते— 'निवेशार्थ्यखिलां भूमिं कन्याभैक्षं

भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥

**गौतमी**— जादे, परिहीअदि गमणवेळा। णिवत्तेहि पिदरं। अहवा चिरेण पुणो एसा एव्वं मन्तइस्सदि। णिवत्तदु भवं।

जाते, परिहीयते गमनवेला। निवर्तय पितरम्। अथ वा चिरेण पुनरेषैवं मन्त्रयिष्यति। निवर्ततां भवान्।

**काश्यपः**— वत्से, उपरुध्यते तपोनुष्ठानम्।

**शकुन्तला**— (भूयः पितरमाश्लिष्य।) तवोणुट्ठाणपीडिदं तादसरीरं। ता ण जुत्तं मह किदे अदिमेत्तं उक्कण्ठिदुम्।

तपोनुष्ठानपीडितं तातशरीरम्। तन्न युक्तं मम कृते अतिमात्रमुत्कण्ठितुम्।

**काश्यपः**— (सनिःश्वासम्)

---

चराम्यहम्' इति। विवाहं कारयित्वेत्यर्थः। तदर्पितेति, तनयार्पितभूरक्षणेन।

अथ वेति। न निवर्तयतीत्यर्थः। तपोनुष्ठानेन सोमतीर्थकृतेन।

शममेष्यति मम शोकः
कथं नु वत्से त्वया रचितपूर्वम् ।
उटजद्वारविरूढं
नीवारबलिं विलोकयतः ॥ २० ॥

गच्छ । शिवास्ते पन्थानः सन्तु ।

[निष्क्रान्ता शकुन्तला सहयायिनश्च ।

**सख्यौ**— (शकुन्तलां विलोक्य) हद्धी, हद्धी । अन्तरिदा सउन्दला वणराईए ।

हा धिक्, हा धिक् । अन्तरिता शकुन्तला वनराज्या ।

**काश्यपः**— (सनिःश्वासम्) अनसूये, गतवती वां सहधर्मचारिणी । निगृह्य शोकमनुगच्छतं मां प्रस्थितम् ।

**उभे**— ताद, सउन्दलाविरहिदं सुण्णं विअ तवोवणं पविसामो ।

तात, शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशामः ।

---

**शममिति** । विरूढम् अङ्कुरितम् । बल्युपयुक्तनीवाराङ्कुरानित्यर्थः । तद्विलोकनं ह्यनुस्मारकम् ।

**काश्यपः—** स्नेहप्रवृत्तिरेवंदर्शिनी । (सविमर्शं परिक्रम्य) हन्त भोः, शकुन्तलां पतिकुलं प्रतिविसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः ?

**अर्थो हि कन्या परकीय एव**
**तामद्य संप्रेष्य परिग्रहीतुः ।**
**जातो ममायं विशदः प्रकामं**
**प्रत्यर्पितन्यास इवान्तरात्मा ॥**

[इति निष्क्रान्ताः सर्वे ।

## इति चतुर्थोऽङ्कः ।

---

अपगतदुहितृस्नेहश्वासाध्यप्रोज्ज्वलन्मनोमुकुरः । निर्व्यूढोपक्रान्तः संतुष्टः प्राह— हन्तेति ॥ प्रतिविसृज्य शकुन्तलाप्रत्यर्पणादित्यर्थः । इदानीम् , अनेनेयन्तं कालं शकुन्तलब्धायास्तस्या रक्षणपोषणसंस्कारविनयाधानादिना व्याकुलत्वं व्यज्यते ॥

**अर्थ इति ।** प्रत्यर्पितेति, प्रत्यर्पितन्यासस्यान्तरात्मेवेति भावः ॥

इत्यभिरामविरचिते अभिज्ञानशाकुन्तलदिङ्मात्रदर्शने
**चतुर्थोऽङ्कः ॥**



# पञ्चमोऽङ्कः ॥

(ततः प्रविशत्यासनस्थो राजा विदूषकश्च ।)

**विदूषकः**— (कर्णं दत्त्वा) भो वअस्स, संगीतसाळन्दरे अवधाणं देहि । कलविसुद्धाए गीदीए सरजोओ सुणीअदि । जाणामि— तत्तहोदी हंसवदिआ वण्णपरिअअं करेदित्ति ।

भो वयस्य, संगीतशालान्तरेऽवधानं देहि । कलविशुद्धाया गीतेः स्वरयोगः श्रूयते । जानामि— तत्रभवती हंसपदिका वर्णपरिचयं करोतीति ।

---

एवं शकुन्तलाया नरपतिनगरप्रयाणमुपपाद्य । उपपादयतीदानीमितरेतरदर्शनाद्यनयोः ॥ अथ गान्धर्वविधिना परिणीय शकुन्तलाम् । यियासुर्नगरं नाममुद्रां न्यस्य तदङ्गुलौ ॥ एकैकमत्र दिवसे दिवसे मदीयं नामाक्षरं गणय गच्छति यावदन्तम् । तावत्प्रिये मदवरोधगृहप्रवेशं नेता जनस्तव समीपमुपैष्यतीति ॥ उक्त्वा नगरमासाद्य शापनिह्नुततत्स्मृतिः । पूर्ववद्राजकार्याणि कुर्वन्राजा कदाचन ॥ आस्थानमण्डपादन्तःपुरमेत्य सुखं स्थितः । श्रवणं प्रति गानस्य वयस्येन नियुज्यते— **भो इति** । अन्तरे मध्ये । कला मधुरा

राजा— तूष्णीं भव, यावदाकर्णयामि ।

(आकाशे गीयते ।)

अहिणवमहुलोलुवो तुमं
तह परिचुम्बिअ चूअमञ्जरिं ।
कमळवसइमेत्तणिव्वुदो
महुअर विम्हरिओ सि णं कहं ॥ १ ॥

अभिनवमधुलोलुपो भवां-
स्तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो
मधुकर विस्मृतोऽस्येनां कथम् ॥

---

विशुद्धा असंकीर्णा । गीतेः गानस्य । स्वराणां षड्जादीनां योगोऽभ्यासः स्वरयोगः । वर्णस्य गीतिक्रमस्य परिचयो वर्णपरिचयः । 'वर्णो नीलादिविप्राद्योः कीर्त्तौ गीतिक्रमे स्तुतौ' इति वैजयन्ती ॥

राज्ञा कंचित्कालं कृतरतिकेलिपरिचया देवीभयेन पुनरुपेक्षिता हंसपदिका नाम वल्लभास्वन्यतमा तुल्यावस्थमधुकरोपालम्भव्याजेन राजानमुपालभते— अभिनवेति । हे मधुकर, भवान् अभिनवमधुलोलुपः, स्वत एवाभिनवे अपरिचिते मधुनि मकरन्दे लोलुपः सतृष्णः । अतः, कथम् कस्माद्धेतोः चूतमञ्जरीम् अर्थादभिनवरसाम् तथा परिचुम्ब्य, तथेत्यनुभूतार्थविषयेण प्रलोभनार्थमनुभूतं

**राजा**— अहो रागपरिवाहिनी गीतिः ।

**विदूषकः**— किं दाव गीदिए अवगओ अक्खरत्थो भवदा ?

किं तावद्गीत्या अवगतोऽक्षरार्थो भवता ?

**राजा**— (सस्मितम्) सकृत्कृतप्रणयोऽयं जनः । तदस्या वसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि । सखे, मद्वचनादुच्यतां हंसपदिका— निपुणमुपालब्धाः स्म इति ।

**विदूषकः**— जं भवं आणवेदि । (उत्थाय) गहिदस्स ताए परकेरएहिं अत्थहिं सिहंडंचळे अछराए वीदराअस्स विअ णत्थि दाणिं मे मोक्खो ।

---

परिचुम्बनप्रकारमनुस्मारयति, तस्य वाग्विषयातीतमतिशयं च द्योतयति । परिचुम्ब्य रसमास्वाद्य । इदानीं कमलवसतिमात्रनिर्वृतः कमले चिरपरिचिते वसतिमात्रेण चिरपरिचयादनास्थया रसास्वादं विना निवासमात्रेण निर्वृतः सुखाभिमानी । एनां कथं विस्मृतवानसि, तत्र हेतुर्न कश्चित् । तस्मादनुचितमेतत् । तदेनां संभावयेत्यर्थः । अप्रस्तुतप्रशंसात्रालंकारः । तेन संसूच्यं राजकर्तृकशकुन्तलाविस्मरणलक्षणं वस्तु व्यज्यते ॥

**रागपरिवाहिनी** रागनिष्यन्दिनी । अक्षराणां स्वरावष्टम्भभूतानाम् । सकृदिति । प्रणयः रतिकेलिपरिचयः । अयं जनः इयम् । निपुणम्, अन्यापदेशेन कृतत्वात् । परकेरकैः

यद्भवानाज्ञापयति । गृहीतस्य तया परकेरकैरर्थैः शिखण्डाञ्चले अप्सरसा वीतरागस्येव नास्तीदानीं मे मोक्षः ।

**राजा**— गच्छ नागरिकवृत्त्या संज्ञापयैनाम् ।

**विदूषकः**— का गई ।

का गतिः । [निष्क्रान्तः ।

**राजा**— (आत्मगतम्) किं नु खलु गीतमेवंविधार्थमाकर्ण्य इष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि । अथ वा,

**रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दा-**
**न्पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।**

---

परकीयैः । अर्थैः प्रयोजनैः । हेतौ तृतीया । त्वद्दर्शनार्थं देवकार्यार्थं चेत्यर्थः । शिखण्डाञ्चले शिखण्डाग्रे । वीतरागस्य तपस्विनः । मोक्षः मोचनम्, अपवर्गः । नागरिकवृत्त्या वैदग्ध्येन । का गतिः किं मे शरणम् ॥

शापतिरोहितत्वात् जननान्तरानुभूतस्येव मनसि वासनारूपतया स्थितस्य अनतिदूरमनुभूतस्य शकुन्तलानुरागस्य गीतिश्रवणेन किंचिदुद्बोधात् पर्युत्सुकत्वमनुभवंस्तद्धेतुं विमृशति— **किं नु खल्विति** । एवंविधः इष्टजनविरहलक्षणम् अर्थो यस्य । अथ वेति, अलं हेतुविकल्पेनेत्यर्थः । अयमत्र हेतुरित्याह— **रम्याणीति** । रम्याणि उद्याने-

तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ २ ॥

[पर्याकुलस्तिष्ठति ।

(ततः प्रविशति कञ्चुकी ।)

**कञ्चुकी**—— अहो नु खल्वीदृशीमवस्थां प्रपन्नोऽस्मि ।

---

न्दूदयादीनि। मधुरान् केकादीन्। सुखितोऽपि प्रियतमामिलितोऽपि। यदुक्तम्—— 'मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः' इति। जन्तुः सर्वम्। अबोधपूर्वं बोधः सम्यग्ज्ञानम्, तत्पूर्वकं न; अस्पष्टतयेत्यर्थः। भावस्थिराणि भावे मनसि स्थिराणि वासनारूपतया लीनानि। अत्र रम्याणि वीक्ष्येति शब्दान्निशम्येति च हेतुभावगर्भौ। अत्र पूर्ववाक्यार्थे उत्तरवाक्यार्थ आरोप्यते। हेतुहेतुमद्भावः संबन्धः। अतो हेतुमति हेतोरारोपोऽयम्। केषांचिदेष प्रकारो हेत्वलंकारः। 'हेतुमता सह हेतोरभिधानमभेदतो हेतुः' इति लक्षणम्। अयमर्थः— जन्तुः सुखितोऽपि रम्यवस्तुवीक्षणात् मधुरशब्दश्रवणाच्च पर्युत्सुकीभवतीति यत् तस्य हेतुरस्पष्टतया जननान्तरसौहृदस्मरणमिति। अत्राप्रस्तुतात्सामान्यात् प्रस्तुतो विशेषः प्रतीयते। अतः सुखितस्य मम गीताकर्णनजनितमिदमौत्सुक्यं जननान्तरस्मरणादेवेत्यर्थः। अप्रस्तुतप्रशंसात्रालंकारः॥

अथ शकुन्तलया सहाश्रमात् हस्तिनपुरं गत्वा राजभवनं प्रविश्य तद्दर्शनार्थमन्तःपुरद्वारमुपगतैः काश्यपशिष्यैः आत्मनिवेदनाय

आचार इत्यवहितेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनार्था ॥ ३ ॥

कामं धर्मकार्यमनतिपात्यं देवस्य । तथापीदानीमेव धर्मासनादुत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे वक्तुम् ।

---

नियुक्तो राजसमीपमुपसर्पन् कञ्चुकी जराभिभूतमात्मानमनुशोचति— अहो इति । ईदृशीमिति वक्ष्यमाणपरामर्शः । **आचार इति** । इतिः हेतौ । अवहितेन, अन्यथा विस्मरणात् । बहुतिथे बहुसंख्यापूरके । प्रस्थाने गमने विक्लवगतेः विवशपदविन्यासस्य । अत्र गमनाशक्तिलक्षणकार्यमुखेण कारणं वार्द्धकं भङ्ग्यन्तरेणोच्यत इति पर्यायोक्तिरलंकारः ॥

**काममिति** । 'काममित्यनुवादे । कामं त्वनुमतेऽव्ययम्' इति केशवः । धर्मकार्यमिति, मुनिसामान्यदृष्ट्या । मुनयो धर्मकार्यार्थमागच्छन्ति । अतिपातोऽत्ययः कालक्षेपः तदर्हमतिपात्यं तदन्यम् अनतिपात्यम्, झटिति निवेदनीयमिति यावत् । उत्थिताय उत्थाय विश्रमार्थं रहसि समासीनाय । उपरोधकारि विश्रमविघ्नकारि ॥

अथ वा, अविश्रमो लोकतन्त्राधिकारः । कुतः ?

**भानुः सकृद्युक्ततुरङ्ग एव**
**रात्रिंदिवं गन्धवहः प्रयाति ।**
**शेषः सदैवाहितभूमिभारः**
**षष्ठांशवृत्तेरपि धर्म एषः ॥ ४ ॥**

यावत् कण्वनियोगमनुतिष्ठामि ।

(परिक्रम्यावलोक्य)

एष देवः,

**प्रजाः प्रजाः स्वा इव तन्त्रयित्वा**
**निषेवते शान्तमना विविक्तम् ।**

---

**अथ वेति** । वक्तुमुत्सह इत्यर्थः । कुत इत्याह— अविश्रम इति । लोकतन्त्रः लोकाधीनः । उक्तमुपपादयति— **भानुरिति** । तुरङ्गसकृद्योजनेन पर्यटनापरिसमाप्तिरुक्ता; भानुः सदा पर्यटति इत्यर्थः । षष्ठांशवृत्तेः राज्ञः । एष एतत्सदृशः सार्वकालिक इत्यर्थः । धर्मः पालनलक्षणः ॥

**प्रजा इति** । स्वाः प्रजा इव आत्मीयान् पुत्रानिव । 'प्रजा तु जनपुत्रयोः' इति वैजयन्ती । उपमया प्रजास्वास्थातिशयः तासामधीनता च व्यज्यते । तन्त्रयित्वा स्वं स्वं कृत्यं कारयित्वा । विविक्तं रहः ॥

  

यूथानि संचार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ ५ ॥

(उपगम्य)

जयतु देवः । एते खलु हिमवतो गिरेरुपत्यकारण्यवासिनः काश्यपसंदेशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः । श्रुत्वा देवः प्रमाणम् ।

**राजा—** (सादरम्) किं काश्यपसंदेशहारिणः ?

**कञ्चुकी—** अथ किम् ।

**राजा—** तेन हि मद्वचनादुच्यतामुपाध्यायः सोमरातः—अमूनाश्रमवासिनः श्रौतेन विधिना पुरस्कृत्य स्वयमेव प्रवेशयितुमर्हतीति । अहमप्येतांस्तपस्विजनदर्शनोचिते देशे प्रतिपालयामि ।

**कञ्चुकी—** यदाज्ञापयति देवः ।

[इति निष्क्रान्तः ।

**राजा—** (उत्थाय) वेत्रवति, अग्निशरणमार्गमादेशय ।

---

प्रमाणं प्रमाता। कर्तरि ल्युट् । कर्तव्यनिर्णेता । तपस्विजनदर्शनोचिते अग्निशरणे, 'अग्न्यगारगतः कार्यं पश्येद्वैद्यतपस्विनाम् । पुरोहिताचार्यसखः प्रत्युद्गम्याभिवाद्य च' इत्युक्तेः ॥

**प्रतीहारी—** इदो इदो देवो ।

इत इतो देवः ।

**राजा—** (परिक्रामति । अधिकारखेदं निरूप्य) सर्वः प्रार्थितमधिगम्य सुखी संपद्यते जन्तुः । राज्ञां तु चरितार्थता दुःखोत्तरैव । कुतः ?

**औत्सुक्यमात्रमवसाययति प्रतिष्ठा**
**क्लिश्नाति लब्धपरिपालनवृत्तिरेवम् ।**
**नातिश्रमापनयनाय न च श्रमाय**
**राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ६ ॥**

(नेपथ्ये)

**वैतालिकौ—** विजयतां देवः ।

---

**अधिकारखेदम्** परिपालनक्लेशम् । विश्रमावसरे मुन्यागमनेन दूयमान आह—**सर्व इति** । अधिगम्य लब्ध्वा । राज्ञां तु विशेषोऽस्ति । चरितार्थता प्रार्थितार्थलाभगतं सुखम् । दुःखोत्तरा दुःखसहिता । उक्तमुपपादयति—**औत्सुक्येति** । प्रतिष्ठा राज्यप्रतिष्ठा । तद्विषयमौत्सुक्यम् । अवसाययति अपनयति । लब्धपरिपालनवृत्तिः लब्धस्य राज्यस्य परिपालनप्रयत्नः । एवं क्लिश्नाति बाधते ॥

**प्रथमः**—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथ वा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया चाश्रितानाम् ॥

**द्वितीयः**—

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।

---

अथ वैतालिकाववसरज्ञौ राज्ञो वैमनस्यमपनेतुं तदनुगुणमुपश्लोकयतः— स्वसुखेति । सर्वो जनः परसुखनिरभिलाषः स्वसुखहेतोः खिद्यते, त्वं तु प्रत्युत स्वसुखनिरभिलाषः लोकसुखार्थे प्रतिदिनं खिद्यसे, आश्चर्यमेतदित्यर्थः । अथ वेति । नात्र विस्मय इत्यर्थः । कुत इत्याह— ते वृत्तिरिति । वृत्तिः विहितो व्यापारः । स्वधर्मानुष्ठाने किमाश्चर्यमित्यर्थः । अनेन प्रजाकार्येषु सततोद्योगस्यावश्यिकत्वं व्यज्यते । दृष्टान्तमाह— अनुभवतीति ॥

नियमयसीति । विमार्गप्रस्थितान् उन्मर्यादान् । आत्तदण्डः यथार्हेण दण्डेन । कल्पसे समर्थोऽसि शिष्टान् परिपालयसीत्यर्थः ।

अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥

**राजा**— एते क्लान्तमनसः पुनर्नवीकृताः स्मः ।

[इति परिक्रामति ।

**प्रतीहारी**-- एसो अहिणवसम्माज्जणसस्सिरिओ सण्णिहिदहोमधेणू अग्गिसरणालिंदो । आरुहदु देवो एणं ।

एषोऽभिनवसंमार्जनसश्रीकः संनिहितहोमधेनुरग्निशरणालिन्दः । आरोहतु देव एनम् ।

**राजा**-- (आरुह्य परिजनांसावलम्बी तिष्ठति ।) वेत्रवति, किमुद्दिश्य तत्रभवता काश्यपेन मत्सकाशमृषयः प्रेषिताः स्युः ?

**किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं**
**धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।**

---

अतः प्रजानाम् । अतनुषु पूर्णेषु । विभवेषु धनधान्यक्षेत्रदारागारादिषु मध्ये, तेष्वन्यतमत्वेन । ज्ञातयः सन्तु नाम; तैर्न विनियोगः, ते विभवगणनापरिपूरणमात्रफलाः । बन्धुकृत्यं त्वयि परिसमाप्तम् । त्वमेव यत् बन्धुकृत्यं विनयाधानरक्षणभरणादि, तन्निःशेषं करोषि ॥

**नवीकृताः** उन्मिषितमनसः कृताः ॥

**किमुद्दिश्य** किं कार्यमुद्दिश्य । कार्यं विकल्पयति— **किं तावदिति** । विघ्नैः तत्कारणैः रक्षःप्रभृतिभिः । असत् हिंसादि ।

आहो स्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥९॥

**प्रतीहारी**— सुअरिदाहिणन्दिणो इसिओ देवं संभावेदुं आअदत्ति तक्केमि।

सुचरिताभिनन्दिन ऋषयो देवं संभावयितुमागता इति तर्कयामि।

(ततः प्रविशन्ति गौतमीसहितां शकुन्तलां पुरस्कृत्य मुनयः पुरतश्चैषां पुरोहितः कञ्चुकीयेन।)

**कञ्चुकी**— इत इतो भवन्तः।

**शार्ङ्गरवः**— शारद्वत,

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते।

---

प्रसवः प्रसूतिः फलकुसुमादेः। अपकृष्टानि चरितानि अपचरितानि, तैः अपचरितैः। आरूढाः बहवः प्रतर्काः यत्तत् आरूढबहुप्रतर्कम्॥

कञ्चुकीयेन। सहेति शेषः। नागरिकजनसंगममसहमान आह— महाभाग इति। यदुक्तम्— 'आरभ्योत्पत्तिमा मृत्योः कलङ्को यस्य नो भवेत्। स्याच्चैवानुपमा कीर्त्तिर्महाभागः स उच्यते' इति। काममित्यनुवादे। अभिन्नस्थितिः अनुल्लङ्घितमर्यादः।

तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥

**शारद्वतः**— स्थाने खलु भवान् पुरप्रवेशादित्थंभूतः । अहमपि ।

अभ्यक्तमिव स्नातः
शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगति-
र्जनमिह सुखसङ्गिनमवैमि ॥ ११ ॥

**शकुन्तला**— (निमित्तं रूपयित्वा) अम्महे, किं त्ति वामेअरं णअणं विआरेदि ?

---

वर्णानां मध्ये अपकृष्टः अन्त्यजः । उपमया क्षणमपि तन्निवासासहत्वं व्यज्यते ॥

**अभ्यक्तमिति** । अभ्यक्तं तैलाभ्यक्तम् । अत्र मालोपमायामहमित्यस्मदर्थस्य प्रतिबिम्बभूतैः स्नातशुचिप्रबुद्धस्वैरगतिभिः बिम्बभूतस्य मुनेः शुभवासनावत्त्वसात्त्विकत्वतत्त्वज्ञानावहितत्वनिरस्तसमस्तैषणत्वानि व्यज्यन्ते ; तथैव जनप्रतिबिम्बैरभ्यक्ताशुचिसुप्तबद्धैः बिम्बभूतस्य जनस्याशुभवासनावत्त्वतामसत्वतत्त्वज्ञानपराङ्मुखत्वसमस्तैषणासंपन्नत्वानि च ॥

**निमित्तम्** । दक्षिणाक्षिस्पन्दनरूपम् । तत्पुनः स्त्रीणामनिष्टा-

अम्महे, किमिति वामेतरन्नयनं विकरोति ?

**गौतमी**— जादे, पडिहदं अमङ्गळं। सुहाणि दे भत्तुकुळ-देवदाओ विअरन्तु ।

पुत्रि, प्रतिहतममङ्गलम् । सुखानि ते भर्तृकुलदेवता वितरन्तु ।

[इति परिक्रामन्ति ।

**पुरोहितः**— (राजानं निर्दिश्य) भोस्तपस्विनः, असावत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनः प्रतिपालयते वः । पश्यतैनम् ।

**शार्ङ्गरवः**— भो महाब्राह्मण, काममेतदभिनन्दनीयम् । तथापि वयमत्र मध्यस्थाः । कुतः ?

**भवन्ति नम्रास्तरवः फलागमै-**
**र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।**

---

वाप्तिसूचकम् । तेन दूयमाना आह— **अम्महे इति** । अम्महे इति देशी अत्र खेदद्योतकः । किमिति कस्माद्धेतोः । विकरोति स्पन्दते । प्रतिहतमित्याशंसायां क्तः, प्रतिहतं भूयादित्यर्थः । प्रागेव युष्मद्दर्शनात्पूर्वमेव । पश्यतैनम् ; आश्चर्यमेवंविधस्यास्य विनीतत्वमिति भावः । महाब्राह्मण, अनेनोत्तानहृदयत्वं व्यज्यते । मध्यस्थाः तटस्थाः अनतिकौतुकाः । कुत इत्याह— **भवन्ति**

**अनुद्धताः सत्पुरुषाः समृद्धिभिः**
**स्वभाव एवैष परोपकारिणाम् ॥ १२ ॥**

**प्रतीहारी**— देव, पसण्णमुहवण्णा इसिओ दीसन्ति । ता विस्सत्थकज्जा एदे ।

देव, प्रसन्नमुखवर्णा ऋषयो दृश्यन्ते । तस्माद्विश्वस्तकार्या एते ।

**राजा**— (शकुन्तलां दृष्ट्वा) अथात्रभवती,

**का स्विदवगुण्ठनवती**
**नातिपरिस्फुटशरीरलावण्या ।**
**मध्ये तपोधनानां**
**किसलयमिव पाण्डुपत्राणाम् ॥ १३ ॥**

---

इति । दूरम् अत्यर्थम् । अनुद्धताः विनीता इत्यर्थः । अत्र अप्रस्तुतात्सामान्यात् प्रस्तुतो विशेषः प्रतीयते— सत्पुरुषोऽयम्, अस्य समृद्धिभिर्विनीतत्वं स्वभाव एव; स्वभावो हि न विस्मयविषय इत्यर्थः ॥

**विश्वस्तकार्याः** । विश्वस्तकार्यसिद्धयः । कार्यं सिध्यति वा न वेति न संशयः । शापेन तामजानन् पृच्छति— **अथेति** । अत्रभवती चूर्णं का स्विदित्यादि चूर्णी । अवगुण्ठनं प्रावरणम् । पाण्डुपत्राणां जीर्णपर्णानाम् ॥

**प्रतीहारी**— देव कुतूहळगब्भो ण मे तक्को पसरदि । दंसणिज्जा उण से आकिदी ळक्खीअदि ।

देव, कुतूहलगर्भो न मे तर्कः प्रसरति । दर्शनीया पुनरस्या आकृतिर्लक्ष्यते ।

**राजा**— भवतु । अनिर्वर्णनीयं परकलत्रम् ।

**शकुन्तला**— ( हस्तमुरसि कृत्वा आत्मगतम् ) हिअअ, किं एव्वं वेवसि ? अज्जउत्तस्स भावत्थं ओहारिअ अधीरं दाव होहि ।

हृदय, किमेवं वेपसे ? आर्यपुत्रस्य भावस्थमवधार्य अधीरं तावद्भव ।

**पुरोहितः**— ( पुरो-गत्वा ) एते विधिवदभ्यर्चितास्तपस्विनः । कश्चिदेषामुपाध्यायसंदेशः । तं देव एव श्रोतुमर्हति ।

---

तर्कः ऊहः । कुतूहलम् आश्चर्यम्; तपोवनमध्ये वनितेत्याश्चर्यम् । कुतूहलं गर्भे यस्य सः कुतूहलगर्भः । अतो न प्रसरति इयं सेति न व्यवस्यति । भवतु, या वा का वा भवतु । अनिर्वर्णनीयं परकलत्रम्; एनां नावलोकयामीति भावः । दुर्निमित्तेन व्यथितं हृदयमाह— हृदयेति । भावस्थमवधार्याधीरं तावद्भव, मनोगतमवधार्य पूर्ववदौदासीन्यं चेत् तदानीमधीरं भव । कश्चिदिति । अस्तीति शेषः ॥

**राजा**— अवहितोऽस्मि ।

**ऋषयः**— (हस्तमुद्यम्य) विजयस्व राजन् ।

**राजा**— सर्वानभिवादये ।

**ऋषयः**— इष्टेन युज्यस्व ।

**राजा**— अपि निर्विघ्नतपसो मुनयः ?

**ऋषयः**—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १४ ॥

**राजा**— अर्थवान् खलु मे राजशब्दः । अथ भगवान् लोकानुग्रहाय कुशली काश्यपः ?

**शार्ङ्गरवः**— स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्वमिदमाह ।

---

कुत इति । अत्र दृष्टान्तेन प्रतापातिशयः क्रियाप्रवर्तकत्वं च व्यज्यते ॥

अर्थवानिति । सम्यक्पालनेन प्रजारञ्जनात् । 'ब्राह्मणं कुशलं पृच्छेत्' इत्याह—अथेति । लोकेत्यादिना परोपकारपरत्वं व्यज्यते । स्वाधीनेति । सिद्धिमान् हि काश्यपः, अतः स्वाधीनकुशल इत्यर्थः । 'क्षत्रबन्धुमनामयम्' इति नयेनाह— अनामयप्रश्नपूर्वमिति ।

**राजा**— किमाज्ञापयति भगवान् ?

**शार्ङ्गरवः**— यन्मिथःसमवायादिमां मदीयां दुहितरं भवानुपायंस्त, तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः ?

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्तिमतीव सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ १५ ॥

तदियमिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ।

**गौतमी**— अज्ज किं वि वत्तुकामह्मि । ण अ मे वअणावआसो अत्थि । कहं त्ति ।

---

इदमपराद्दष्टमाह— यन्मिथ इति । मिथः समवायात् मिथः समवायमवलम्ब्य । मिथो रहः, समवायः संगमः, गान्धर्वो विधिः । अनुमनने हेतुः प्रीतिः ॥

प्रीतेर्हेतुमाह— त्वमिति । अर्हतां पूज्यानां सत्कारयोग्यानाम् । मूर्तिमती सत्क्रियेव । सकलेन्द्रियसंतर्पणत्वमुत्प्रेक्षाया निमित्तम् । सत्कर्तॄणां चरितार्थताभिमानः फलम् । समानयन् संगमयन् । हेतौ शता । वाच्यम् असमगुणमिथुनसमानयनजातमपवादम् । अत्र इतः पूर्वमेवंगुणोपेतं वधूवरं नाभूदिति व्यज्यते । अत्र समोऽलंकारः उत्प्रेक्षया संसृष्टः, 'समं योग्यतया योगो यदि संभावितः क्वचित्' इति ।

**णावेक्खिदो गुरुअणो इमाए तुए वि ण पुच्छिदो बन्धू ।**
**एक्कक्कम एव्व किदे भणामि किं एक्कमेक्कस्स ॥ १६ ॥**

आर्य किमपि वक्तुकामास्मि । न च मे वचनावकाशोऽस्ति । कथमिति ।

नावेक्षितो गुरुजनोऽनया त्वयापि न पृष्टो बन्धुः ।
एकैकम एव कृते भणामि किमेकमेकस्य ॥ १६ ॥

**शकुन्तला**—— (आत्मगतम्) किं णु खु अज्जउत्तो भणाइ ?
किं नु खल्वार्यपुत्रो भणति ?

**राजा**— किमिदमुपन्यस्तम् ?

**शकुन्तला**—— (आत्मगतम्) पावओ खु वअणोवण्णासो ।

---

अनुचितं त्वया कृतमिति विवक्षितं पारुष्यभयात् भङ्ग्यन्तरेण सूचयति— **आर्येति** ॥

कथमिति । कथं वचनावकाशाभाव इति चेदुच्यत इत्यर्थः । तदाह– **नावेक्षित इति** । आर्येयम् । बन्धुः तातकाश्यपः । बन्धुत्वं श्वशुरत्वात् । एकस्येति संबन्धमात्रे षष्ठी । अस्यास्तव च तुल्यदोषत्वादेतत्संबन्धे तव न दोषः । अतो न वचनावकाशः । अतस्त्वां न वच्मीति भावः ॥

शापविस्मृतशकुन्तलाविवाह आह— **किमिदमिति** । शापमजानती प्राह— पावक इति । पावकत्वारोपः संतापातिशयकर-

पावकः खलु वचनोपन्यासः ।

**शार्ङ्गरवः**— कथं किं नाम । ननु भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः ।

**सतीमपि ज्ञातिकुलैकसंश्रयां**
**जनोऽन्यथा भर्तृमतीं विशङ्कते ।**
**अतः समीपे परिणेतुरिष्यते**
**तदुज्झितापि प्रमदा स्वबन्धुभिः ॥ १७ ॥**

**राजा**— किं चात्रभवती मया परिणीतपूर्वा ?

---

त्वात् । शापहेतुकं विस्मरणमजानन् शार्ङ्गरवः जानन्नेवायमेनामवधीरयितुमारभत इति मत्वाह— **कथं किं नामेति** । कस्मादस्मदुदितं वृत्तान्तमजानन्निव पृच्छसीत्यर्थः । नन्विति । भवन्त एव अस्मदुपदेशं विना भवन्तः स्वयमेव लोकवृत्तान्तज्ञाः, तथापि लोकवृत्तं ब्रूम इति भावः ॥

**सतीमिति** । सतीं प्रतिव्रताम् । ज्ञातीति । पितृगृह एव वसन्तीम् । अन्यथा असतीम् । भर्तृमतीम्, भर्तरि जीवति सतीत्यर्थः । यत एवम् अतो लोकापवादभीरुणा मुनिना त्वयोपेक्षितेयं साध्वी तव धर्मपत्नी त्वत्समीपं प्रति प्रेषिता, तदिदानीं प्रतिगृह्यतां सहधर्मचरणायेत्यर्थः । किं चेति प्रश्ने ॥

**शकुन्तला**— (सविषादम् आत्मगतम्) हिअअ, संपदं उइदा दे आसंका।

हृदय, साम्प्रतमुचिता ते आशङ्का।

**शार्ङ्गरवः**—

**किं कृतकार्यद्वेषो धर्मं प्रति विमुखता कृशावज्ञा।**

**राजा**— कुतोऽयमसत्कल्पनाप्रश्नः?

**शार्ङ्गरवः**—

**मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु॥ १८॥**

**राजा**— विशेषेणाधिक्षिप्तोऽस्मि।

---

**सांप्रतं** स्वयंकृते विवाहे संदिह्यमाने सति। **किमिति**। अत्र हेतुमति हेतुरारोप्यते। अतोऽयमर्थः— हे राजन्, तवायं कृतकार्यद्वेषः कृते कार्ये विवाहे व्यूढायामस्यां द्वेषः। धर्मं प्रति विमुखतया किम्, कृशावज्ञया किम्। कृशेषु असंपन्नेषु अस्मासु। 'यः कृशाश्वः कृशगवः कृशभृत्यः कृशातिथिः। स वै राजन्कृशो नाम न शरीरकृशः कृशः' इति। **कुत इति**। असत्कल्पनाप्रश्नः असतः अविद्यमानस्य कृतकार्यद्वेषस्य कल्पनया प्रश्नः हेतुप्रश्नः। नेयमसंभवतः कल्पनेत्याह— **मूर्च्छन्तीति**। अमी एवंविधाः। त्वमैश्वर्यमत्तः, अतस्त्वयि कृतकार्यद्वेषः संभवतीत्यर्थः। विशेषेणाधिक्षिप्तोऽस्मि ऐश्वर्यमत्तत्ववचनात्॥

**गौतमी**— जादे, मुहुत्तअं मा ळज्ज। अवणइस्सं दे ओउंठणं। तदो भट्टा तुमं पच्चभिजाणिस्सदि।

पुत्रि, मुहूर्तं मा लज्जस्व। अपनेष्यामि तवावगुण्ठनम्। ततो भर्ता त्वां प्रत्यभिज्ञास्यति।

[इति यथोक्तं करोति।

**राजा**— (शकुन्तलां निर्वर्ण्य आत्मगतम्)

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन्।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि हातुम्॥

[इति विचारयन् स्थितः।

**प्रतीहारी**— (जनान्तिकम्) अहो धम्मावेक्खिदा भट्टिणो। ईदिसं णाम सुहोवणदं रूवं देक्खिअ को विआरेदि?

अहो धर्मावेक्षिता भर्तुः! ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा को विचारयति?

---

इदमिति। उपनतं स्वयमेवागतम्। अक्लिष्टकान्ति परिपूर्णलावण्यम्। अव्यवस्यन् अनिश्चिन्वानः। परिभोक्तुं दृश्यबुद्ध्यावलोकयितुं रसमास्वादयितुं च। हातुं परोक्षयितुं विहायान्यस्मिन् गन्तुं च। अहो धर्मावेक्षिता भर्तुः; कुत इत्याह— ईदृशमिति॥

**शार्ङ्गरवः**— राजन्, किमिदं जोषमास्यते ?

**राजा**— भोस्तपोधन, चिन्तयन्नपि स्वीकरणमत्रभवत्या न स्मरामि । ततः कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानमक्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये ।

**शकुन्तला**— (सविषादमपवार्य) परिणए एव्व संदेहो, कुदो मे दूराधिरोहिणी आसा ?

परिणय एव संदेहः, कुतो मे दूराधिरोहिण्याशा ?

**शार्ङ्गरवः**— मा तावत् ।

**कृताभिमर्शामनुमन्यमानः**
**सुतां त्वया नाम मुनिर्विमान्यः ।**

---

**जोषं** तूष्णीम् । स्वीकरणं परिणयनम् । अभिव्यक्तसत्त्वलक्षणाम् अभिव्यक्तं स्पष्टं सत्त्वस्य गर्भस्य लक्षणं कपोलपाण्डिमस्तनचूचुकनीलिमादि यस्याः । अक्षेत्रिणम् अकलत्रिणम् । प्रतिपत्स्ये अनुमंस्ये, इयं मम पत्नीति । कुत इति । सफला न स्यादिति भावः । मा तावदिति वैपरीत्यद्योतकम् । विपरीतमेतदित्यर्थः । किं तदित्याह— **कृतेति** । अभिमर्शः बलात् स्पर्शः । अनुमन्यमानः तव महिषीत्वेन प्रतिगृह्यतामिति त्वत्समीपं प्रापयन्नित्यर्थः । नामेत्यसंभावनायाम् । विमान्यः, भवतीति शेषः । मुनिकर्तृकस्य च त्वत्कर्मकस्य च विमाननस्यात्र संभावना, न तु त्वत्क-

दृष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥ २० ॥

**शारद्वतः**— शार्ङ्गरव, विरम त्वमिदानीम् । शकुन्तले, वक्तव्यमुक्तमस्माभिः । सोऽयमत्रभवानेवमाह । दीयतामस्मै प्रत्ययप्रतिवचनम् ।

**शकुन्तला**— (स्वगतम्) इदं अवत्थन्तरं गदे तारिसे अणुराए किं वा सुमराविदेण ? अत्ता दाणिं मे सोअणिज्जोत्ति ववसिदं एदम् । (प्रकाशम्) अज्जउत्त (इत्यर्धोक्ते) अहवा संसइदे ण एस समुदाआरो । पोरव, जुत्तं णाम दे पुरा अस्समपदे सहावोत्ताणहिअअं इमं जणं समअपुव्वं पदारिअ ईरिसेहिं अक्खरेहिं पच्चाचक्खिदुं ।

इदमवस्थान्तरं गते तादृशे अनुरागे ।किं वा स्मारितेन । आत्मेदानीं मे शोचनीय इति व्यवसित-

---

र्तृकस्य मुनिकर्मकस्य । त्वं खलु सुताभिमर्शादपराद्धः, अतस्त्वत्कर्तृकं मुनिकर्मकमेतद्विमाननं विपरीतमित्यर्थः । दृष्टमित्यादि । येन सुतानुमननेन हेतुना त्वं दृष्टं प्रथमं दस्युना हृतं पुनरन्विष्य दृष्टं स्वमर्थं प्रतिग्राहयता कस्मैचिद्दित्सुना पात्रीकृतः दस्युः चोर इवासि इत्यन्वयः । तस्मादेनां स्वीकृत्य मुनिं संमानयेति भावः । **प्रत्ययप्रतिवचनं** प्रत्ययार्थे प्रतिवचनम् । इति व्यवसितमेतत् ।

मेतत् । आर्यपुत्र,— अथ वा, संशयिते नैष समुदाचारः । पौरव, युक्तं नाम ते पुरा आश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्य साम्प्रतमीदृशैरक्षरैः प्रत्याख्यातुम् ?

**राजा**— शान्तं पापं शान्तं पापम् ।

**व्यपदेशमाविलयितुं**
**किमीहसे जनमिमं च पातयितुम् ।**
**कूलंकषेव सिन्धुः**
**प्रसन्नमम्भस्तटतरुं च ॥ २१ ॥**

---

इत्येतद्व्यवसितमित्यन्वयः । **अथ वेति** । आर्यपुत्रेति न संबोधनीयमित्यर्थः । कुत इत्याह— संशयित इति । परिणयने संशयिते । यथोचितं संबोधयति– पौरवेति । उत्तानम् अगम्भीरम् । समयपूर्वं समयप्रकारो वक्ष्यते—एकैकमत्र दिवसे दिवस इत्यादि । प्रतार्य वञ्चयित्वा । ईदृशैः परकलत्रत्वप्रतिपादकैः । प्रत्याख्यातुं निराकर्तुम् । युक्तं नामेति विपरीतलक्षणा । पुरुवंशजातस्य तवानुचितमेतदित्यर्थः । अतोऽमुं जनं मा निराकुरुष्वेति भावः । शान्तमित्याशंसायां क्तः ॥

**व्यपदेशमिति** । व्यपदेशं वंशम् । आविलयितुं दूषयितुं कलुषयितुं च । पातयितुं नरके अम्भसि च । प्रसन्नं निर्दोषमच्छं च ॥

  

**शकुन्तला**— होदु जइ परमत्थदो परिग्गहसंकिणा तुए एव्वं पउत्तं अहिण्णाणेण इमिणा तुज्झ आसंकं अवणइस्स ।

भवतु यदि परमार्थतः परिग्रहशङ्किना त्वयैवं प्रवृत्तम्, अभिज्ञानेनामुना तव आशङ्कामपनेष्यामि ।

**राजा**— उदारम् ।

**शकुन्तला**— (मुद्रास्थानं परामृश्य) हद्धि ! हद्धि ! अङ्गुळीअसुण्णा मे अङ्गुळी ।

हा धिक् ! हा धिक् ! अङ्गुलीयकशून्या मे अङ्गुलिः ।

[इति गौतमीमवेक्षते ।

**गौतमी**— णूणं दे सक्कावदारब्भन्तरे सईतित्थसळिळं वन्दमाणाए पब्भट्टं अंगुलीअअं ।

नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ।

---

सखीभ्यामुपदिष्टमङ्गुलीयकदर्शनं कर्तुमारभते— **भवत्विति** । उदारं विदग्धमेतदित्यर्थः । 'उदारो महति ख्याते दानशौण्डविदग्धयोः' इति वैजयन्ती । अङ्गुलीयकशून्या मे अङ्गुलिः, कथमेतदित्यवेक्षणाभिप्रायः । अङ्गुलीयादर्शनस्य संगतिं वितर्कयति— **नूनमिति** । शक्रावतार इति गङ्गातीरैक-

**राजा**— (सस्मितम्) इदं तत् प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।

**शकुन्तला**— एत्थ दाव विहिणा दंसिदं पहुत्तणं । अवरं दे कहइस्सं ।

अत्र तावद्विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि ।

**राजा**— श्रोतव्यमिदानीं संवृत्तम् ।

**शकुन्तला**— णं एक्कस्सिं दिअहे णोमालिआमण्डवे णळिणीपत्तभाअणगअं उदअं तव हत्थे सण्णिहिदं आसि ।

नन्वेकस्मिन् दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् ।

**राजा**— शृणुमस्तावत् ।

---

देशः । इदं तदिति । इदं तापसतरुण्या प्रागभाविनोऽङ्गुलीयस्य प्रध्वंसाभावे कथिते तापसवृद्धया तस्य संगतिकथनम् । प्रत्युत्पन्ना तत्तदुचितविषयोन्मेषवती मतिर्यस्य तत् प्रत्युत्पन्नमति । स्त्रैणं स्त्रीसमूहः । अत्र तावद्विधिना दर्शितं प्रभुत्वम्— अङ्गुलीयेन मा बोधयेदिति । श्रोतव्यमिदानीं संवृत्तम् । पूर्वं द्रष्टव्यत्वेनोक्तमभिज्ञानम्, इदानीं श्रोतव्यमभूदित्यर्थः । शृणुमस्तावत्, विवक्षितं सर्वमुच्यता-

**शकुन्तला**— तक्खणं तु सो मम किदअपुत्तओ दीहावंगो णाम हरिणपोदओ उवट्ठिदो । तुए अअं दाव पढमं पिबदुत्ति अणुकम्पिणा उवच्छंदिदो उदएण, ण उण दे अवरिअआदो हत्थब्भासं उवगओ । पच्छा तस्सिं एव्व मए गहिदे सळिळे किदो तेण पणओ । तदो इत्थं परिहसिदोसि— सव्वो सगन्धेसु विस्ससदि, दुवे वि एत्थ आरण्णआ त्ति ।

तत्क्षणं तु स मम कृतकपुत्रको दीर्घापाङ्गो नाम हरिणपोतक उपस्थितः । त्वयायं तावत् प्रथमं पिबत्वित्यनुकम्पिना उपच्छन्दित उदकेन न पुनस्तवापरिचयाद्धस्ताभ्याशमुपगतः । पश्चात्तस्मिन्नेव मया गृहीते सलिले कृतस्तेन प्रणयः । तत इत्थं प्रहसितोऽसि— सर्वः सगन्धेषु विश्वसिति, द्वावप्यत्रारण्यकाविति ।

**राजा**— एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतवाङ्मधुधाराभिराकृष्यन्ते विषयिणः ।

---

मिति भावः । उपच्छन्दनम् अनुवृत्तिः । प्रहसित इति कर्तरि क्तः । सगन्धः बन्धुः । एवमिति । नाहं विषयी, अतस्तवानृतवाङ्मधुधाराभिर्नाकृष्ये इत्यर्थः ॥

**गौतमी**— महाभाअ, णारुहासि एव्वं मन्तिदुं। तपोवणसंवड्ढिदो अणहिण्णो अयं जणो केदवस्स।

महाभाग, नार्हस्येवं मन्त्रयितुम्। तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य।

**राजा**— तापसवृद्धे,

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ २२ ॥

**शकुन्तला**— (सरोषम्) अणज्ज, अत्तणो हिअआणुमाणेण पेक्खसि। को अण्णो धम्मकञ्चुअप्पवेसिणो तिण-

---

नार्हस्येवं मन्त्रयितुम्; कुत इत्याह— तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य ॥

स्त्रीणामिति। स्त्रीणां मध्ये। अशिक्षितपटुत्वम् अर्थात् कैतवे। याः प्रतिबोधवत्यः तासु किमुतेत्यर्थः। अशिक्षितापीयं कैतवे निपुणेत्यर्थः। उक्तं सामान्यं विशेषेणोपपादयति— प्रागिति। अन्तरिक्षगमनात् प्राक् उड्डयनशक्त्युदयात् पूर्वम्। अन्यैः काकैः।

च्छण्णकूवोवमस्स तुह अणुकारी भविस्सदि ?

अनार्य, आत्मनो हृदयानुमानेन पश्यसि। कोऽन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकारी भविष्यति ?

**राजा**— (आत्मगतम्) संदिग्धबुद्धिं कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते। तथा ह्यनया—

---

अत्रार्थापत्तिरप्रस्तुतप्रशंसार्थान्तरन्यासश्च। आत्मनो हृदयानुमानेन पश्यसि। अत्रानुमानशब्देन प्रमाणसामान्यं लक्ष्यते। आत्महृदयं प्रमाणीकृत्येत्यर्थः। आत्मवत् पश्यसीति भावः। उक्तं च 'स्वयमशुद्धः परानाशङ्कते' इति। त्वमिव नृशंसः कोऽपि नेत्याह— कोऽन्य इति। बहिर्धर्मिष्ठस्य— अन्तर्नृशंसस्येत्यर्थः— तव सदृशः कोऽपि नेत्यर्थः। अथ कुपितायास्तस्या अक्षिलौहित्यभ्रूभेदाभ्यामनुभावाभ्यां कोपस्याकृत्रिमत्वमवधार्य, सत्ये एव परिणयने अननुमन्यमाने सति एवंविधः कोपः स्यादिति परिणयनस्य सत्यत्वं मन्वानोऽपि शापबलेनानिश्चिन्वान आह— **संदिग्धेति**। इयं मया परिणीता वा न वेति संदिग्धा बुद्धिर्यस्य। अविद्यमानं कैतवं यस्मिन्। लक्ष्यते लक्षणैरुन्नीयते। अस्याः कोपः अकैतव इव लक्ष्यते। अतः मां संदिग्धबुद्धिं कुर्वन्नित्यन्वयः। एवं कोपस्याकृत्रिमत्वमुक्त्वा तस्य ज्ञापकहेतुमाह— **तथा हीत्यादिना**।

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने ।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २३ ॥

(प्रकाशम्) भद्रे, प्रथितं दुष्यन्तचरितं तथापीदं न लक्ष्यते ।

---

तत्र अस्या अक्ष्यतिलौहित्यं भ्रूभङ्गश्चेति विधेयं ज्ञापकद्वयमनूद्य तयोर्भ्रूभङ्गं वर्णयति— **मय्येवेति** । न यस्मिन् कस्मिंश्चित्तटस्थे, अपि तु रहःप्रणयप्रतिसंबन्धिनि मयि । विस्मरणेन दारुणा निरनुक्रोशा चित्तवृत्तिर्यस्य । प्रणयं परिचयम् । अप्रतिपद्यमाने अननुमन्यमाने । निमित्ते सप्तमी । निमित्तं च स्मरविषयस्य रोषस्य । स खल्वेवंविधे मय्यास्थाबन्धं कृतवान् । भ्रुवोः भेदात् भङ्गात् । ल्यब्लोपे पञ्चमी, भ्रूभेदमपदिश्य । शरासनं त्रिभुवनविजयप्रधानसाधनम् । अतिरुषा तीव्रेण स्मरविषयेण रोषेण । तथा हि मय्येव विस्मरणदारुणचित्तवृत्तौ रहः वृत्तं प्रणयम् अप्रतिपद्यमाने अनयातिलोहिताक्ष्यातिरुषा कुटिलयोः भ्रुवोर्भेदात् स्मरस्य शरासनं भग्नमिवेत्यन्वयः । सापह्नवोत्प्रेक्षात्रालंकारः । तेन भ्रूगतः संस्थानसौष्ठवातिशयः सकललोकहृदयोन्माथकत्वं च व्यज्यते । अत्र भ्रुवोर्वर्णनं परिणयनस्य संदेहात् किंचिदुन्मिषिताया रतेर्वागारम्भानुभावः ॥

पुनरपि शापतिरोहितस्मृतिराह— **प्रथितमिति** । दुष्यन्तचरित-

**शकुन्तला**— सुट्ठु दाव अत्तच्छन्दआरिणी किदम्हि । जा अहं इमस्स पुरुवंसप्पच्चएण मुहमहुणो हिअअत्थविसस्स हत्थब्भासं उवअदा ।

सुष्ठु तावदात्मच्छन्दचारिणी कृतास्मि । याहममुष्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थविषस्य हस्ताभ्याशमुपगता ।

[इति पटान्तेन मुखमावृत्य रोदिति ।

**शार्ङ्गरवः**— इत्थमात्मकृतं प्रतिहतं चापलं दहति ।

**अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।**
**अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २४ ॥**

**राजा**— अयि भोः, किमत्रभवतीप्रत्ययादेवास्मान् संवृतदोषाक्षरेण क्षिणुथ ?

---

मिति प्रबन्धकटाक्षेण । इदं त्वत्परिणयनम् । न लक्ष्यते चरितप्रतिपादकेषु प्रबन्धेषु । सुष्ठु सुतराम् । आत्मच्छन्दचारिणी स्वैरिणी असती । अहमेवात्रापराद्धेत्याह— याहमिति । पुरुवंशेति । आभिजात्यं विश्वस्येत्यर्थः । मुखमधोः मधुराभाषिणः । हृदयस्थविषस्य क्रूरहृदयस्य । हस्ताभ्याशमुपगता वशंवदाभूवम् । इत्थमिति । आत्मकृतं स्वयमेव कृतम् । प्रतिहतं मध्ये सान्तरायम् । अत इति । सर्वं परीक्ष्य कर्तव्यं रहःसंगतं विशेषात् । कुत इत्याह— अज्ञातेति ॥

अत्रभवतीप्रत्ययादेव, अत्रभवत्या वचनमविश्वसनीयमिति भावः ॥

**शार्ङ्गरवः**— (सासूयम्) श्रुतं भवद्भिरधरोत्तरम् ?

आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते ये
विद्येति ते सन्तु किलाप्तवाचः ॥ २५ ॥

**राजा**— भोः सत्यवादिन्, अभ्युपगतं तावदस्माभिरेवम् । किं पुनरिमामतिसंधाय लभ्यते ?

**शार्ङ्गरवः**— विनिपातः ।

**राजा**— विनिपातः पौरवैः प्रार्थ्यत इति श्रद्धेयमेतत् ।

---

तदुक्तमसहमान आत्मीयानाह— **श्रुतमिति** । अत्र काका प्रश्नः । अधरोत्तरं विपर्ययः । यथा भारते 'अधर्मेण जितो धर्मः प्रवृत्तमधरोत्तरम् । शर्मिष्ठयातिवृत्तास्मि दुहित्रा वृषपर्वणः' इति । राज्ञोक्तमधरोत्तरं भवद्भिः श्रुतं किमु इत्यर्थः । तत्प्रकारमाह— **आ जन्मन इति** । विद्येति । इयं नः कुलविद्येति । आप्तवाचः विश्वसनीयवाचः । 'आप्तः प्रत्ययितः स्मृतः' इति वैजयन्ती । अविदितशाठ्याया अस्या वचनमप्रमाणं शाठ्यपण्डितस्य स्वस्य वचनं प्रमाणं किलेत्यर्थः । **भो इति** । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायेनाह— किं पुनरिति । विनिपात इति । लभ्यत इत्यायाति । श्रद्धेयमिति विपरीतलक्षणा । अश्रद्धेयमित्यर्थः ।

**शारद्वतः**— शार्ङ्गरव, किमुत्तरोत्तरेण । अनुष्ठितो गुरुसंदेशः । प्रतिनिवर्तामहे वयम् । राजन्,

**तदेषा भवतः कान्ता त्यज वैनां गृहाण वा ।**
**उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ २६ ॥**

गौतमि, गच्छाग्रतः ।

[इति प्रस्थिताः ।

**शकुन्तला**— हं, इमिणा दाव किदवेण विप्पळद्धह्मि । तुह्मे वि मं परिच्चअह ।

हम्, अमुना तावत् कितवेन विप्रलब्धास्मि । यूयमपि मां परित्यजथ?

[इति अनुप्रतिष्ठते ।

---

अत्र सत्यमप्यश्रद्धेयं न वदेदिति नयो व्यज्यते । उत्तरोत्तरेण उपर्युपरि व्यवहारेण। तद्विरमेति भावः । कुत इत्याह— अनुष्ठित इति । अनन्तरकरणीयमाह— प्रतीति ॥

जिगमिषुः कार्यव्यवहारमुपसंहरति— **तदेषेति** । कामचाराभ्यनुज्ञाने हेतुमाह— उपपन्नेति ॥

हम् इति विषादे । यूयमपि मां परित्यजथ । अत्र काक्वा यूयं मां न परित्यजतेति व्यज्यते ॥

**गौतमी**— (स्थित्वा) वच्छ सङ्गरव, अणुगच्छइ णो करुणपरिदेविणी सउंदला । पच्चादेसपरुसे भत्तुणि किं वा पुत्तिआ करेदु ?

वत्स शार्ङ्गरव, अनुगच्छति नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्तरि किं वा पुत्रिका करोतु ?

**शार्ङ्गरवः**— (सरोषं परावृत्य) पुरोभागे, किं स्वातन्त्र्यमवलम्बयते ?

(शकुन्तला भीता वेपते ।)

**शार्ङ्गरवः**— शकुन्तले,

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ २७ ॥

तत्तिष्ठ । साधयामो वयम् ।

---

पुरोभागे दुष्टे । मास्माननुगम इति भावः ॥

कुत इत्याह— यदीति । उत्कुलया उल्लङ्घितकुलोचिताचारया । व्रतं पतिव्रतम् । क्षमं योग्यम् ॥

**राजा—** भोस्तपस्विन्, किमत्रभवतीं विप्रलपसि ।

**कुमुदान्येव शशाङ्कः**
**सविता बोधयति पङ्कजान्येव ।**
**वशिनां हि परपरिग्रह-**
**संश्लेषपराङ्मुखी वृत्तिः ॥ २८ ॥**

**शार्ङ्गरवः—** यदि पूर्ववृत्तमन्यासङ्गाद्विस्मृतो भवान्, तदा कथमधर्मभीरुता ?

**राजा—** भवन्तमेवात्र गुरुलाघवज्ञं पृच्छामि ।

**मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।**
**दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ २९ ॥**

**पुरोहितः—** (विचार्य) यदि तावदेवं क्रियताम् ।

**राजा—** अनुशास्तु मां पुरोहितः ।

---

विप्रलपसि विरुद्धं प्रलपसि । इह स्थितामेनां नाहं स्वीकरिष्यामीत्याह— **कुमुदानीति** । अधर्मभीरुता अधर्मात् परदारगमनलक्षणात् । तथापि परिणयनस्यानिश्चये न स्वीकर्तव्येत्याह— भवन्तमिति । **मूढ इति** । मूढः विस्मृतपूर्ववृत्तान्तः । पांसुलः पातकी । राज्ञः संकटमवधार्य तन्निवृत्त्युपायं विचार्याह— यदि तावदिति ॥

**पुरोहितः**— अत्रभवती तावदा प्रसवादस्मद्गृहे तिष्ठतु । कुत इदमुच्यत इति चेत्, त्वं साधुभिरादिष्टपूर्वः— प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रः तल्लक्षणोपेतो भविष्यति, अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये च पितुरस्याः समीपनयनमवस्थितमेव ।

**राजा**— यथा गुरुभ्यो रोचते ।

**पुरोहितः**— वत्से, अनुगच्छ माम् ।

**शकुन्तला**— भवअदि वसुहे, देहि मे विवरम् ।

भगवति वसुधे, देहि मे विवरम् ।

[इति रुदती निष्क्रान्ता पुरोधसा सह तपस्विभिश्च ।

राजा शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति ।

(नेपथ्ये)

आश्चर्यमाश्चर्यम् ।

**राजा**— (आकर्ण्य) किं नु खलु स्यात् ?

(प्रविश्य)

**पुरोहितः**— (सविस्मयम्) देव अद्भुतं खलु संवृत्तम् ।

---

उभयकुलभ्रंशमसहमानाह— भगवतीति । शकुन्तलागतं तद्विषयं वृत्तान्तम् ॥

राजा— किमिव ?

पुरोहितः— परावृत्तेषु कण्वशिष्येषु,

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।

राजा— किमन्यत् ।

पुरोहितः—

स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-
दाक्षिप्यैनां ज्योतिरेकं तिरोऽभूत् ॥ ३० ॥

(सर्वे विस्मयं रूपयन्ति ।)

राजा— भगवन्, प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव । किं वृथा तर्केणान्विष्यते । विश्राम्यतु भवान् ।

पुरोहितः— विजयस्व ।

[इति निष्क्रान्तः ।

राजा— वेत्रवति, पर्याकुलोऽस्मि । शयनगृहमार्गमादेशय ।

प्रतीहारी— इदो इदो देवो ।

---

सा निन्दन्तीति । बाहूत्क्षेपम् बाहू उत्क्षिप्य । चशब्दो यौगपद्य-द्योतकः । अतः पृच्छति– किमन्यदिति । अन्यदाह— स्त्रीसंस्थान-मिति । स्त्रीसंस्थानं स्त्रीरूपम् ॥

इत इतो देवः ।

[इति परिक्रामतः ।

राजा-- (स्वगतम्)

कामं प्रत्यादिष्टां
स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं
प्रत्याययतीव मे हृदयम् ॥ ३१ ॥

[इति निष्क्रान्तौ ।

इति पञ्चमोऽङ्कः ॥

---

काममिति । प्रत्याययति तव परिग्रह इति विश्वासयतीत्यर्थः ॥

इत्यभिरामविरचिते अभिज्ञानशाकुन्तलदिङ्मात्रदर्शने
पञ्चमोऽङ्कः ॥



# षष्ठोऽङ्कः ॥

(ततः प्रविशति नागरिकः स्यालः पश्चाद्बद्धं पुरुषमादाय रक्षिणौ च।)

**रक्षिणौ**— (ताडयित्वा) हंहो कुम्भीळअ, कहिं तुए एदे मणिबन्धणुक्किण्णणामहेअङ्किए ळाअकीए अङ्गुळीअए शमाशादिए ?

हंहो कुम्भीलक, कस्मिन् त्वया एतन्मणिबन्धनोत्की-

---

एवं शकुन्तलाया राज्ञश्चान्योन्यदर्शनं तेन। तस्याः परिणयनादेर्विस्मरणं नाममुद्रायाः ॥ भ्रंशं गङ्गास्रोतसि परदारधिया निराकृतिं तस्याः। हरणं निराकृताया महसा केनापि योषिदाकृतिना ॥ उपपाद्यैतान्यधुना भ्रष्टायाः पयसि जह्नुकन्यायाः। आगमनं मुद्रायाः प्रवेशकेनोपपादयति— **तत इति**। नागरिकः नगरे नियुक्तः। स्यालः राज्ञः कार्योपयोगी हीनजातिः कश्चित्। यथाह धनिकः कार्यसहकारिवर्गगणने— 'म्लेच्छाभीरशकाराद्याः स्वस्वकार्योपयोगिनः। शकारो राज्ञः स्यालो हीनजातिः' इति। 'राज्ञः स्यालस्तु राष्ट्रियः' इत्यमरः। पश्चात् बद्धं बाहू पृष्ठे संगमय्य तयोर्बद्धम्। रक्षिणौ पुरुषरक्षकौ। कुम्भीलकः चोरः। कस्मिन् कस्मिन्स्थितमित्यर्थः। मणिबन्धनेति। मणीनां बन्धने बद्धेषु मणिषु उत्कीर्णेन उल्लिखितलिपिना नामधेयेना-

र्णनामधेयाङ्कितं राजकीयमङ्गुलीयकं समासादितम् ?

**पुरुषः**— (भीतिं नाटयित्वा) पशीदन्तु भावमिश्शा । अहके ण ईदिशकम्मकाळी ।

प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।

**प्रथमः**— किं खु शोभणे बह्मणत्ति करिअ पडिग्गहे दे दिण्णे ?

किं खलु शोभनो ब्राह्मण इति कृत्वा प्रतिग्रहस्ते दत्तः ?

**पुरुषः**— शुणुह दाणिं । अहके शक्कावदाळवाशी धीवळे ।

शृणुतेदानीम् । अहं शक्रावतारवासी धीवरः ।

**द्वितीयः**— पाडच्चर, किं अम्हेहिं जादी पुच्छिदे ?

पाटच्चर, किमस्माभिर्जातिः पृष्टा ?

**स्यालः**— कहेदु सव्वं अणुक्कमेण । मा णं अन्तरा पडिबन्धह ।

कथयतु सर्वमनुक्रमेण । मा एनमन्तरा प्रतिबध्नीतम् ।

**उभौ**— जं आवुत्ते आणवेदि ।

यदावुत्त आज्ञापयति ।

---

ङ्कितम् । राजकीयं राजसंबन्धि । समासादितं हृतम् । भावमिश्राः । 'मान्यो भावेति वक्तव्यः' इति धनिकः । पतिगृह्यत इति प्रतिग्रहः देयद्रव्यम् । धीवरः दाशः । 'कैवर्ते दाशधीवरौ' इत्यमरः । पाटच्चर । 'चोरैकागारिकस्तेनपाटच्चरमलिम्लुचाः' इत्यमरः ॥

**स्यालः**— कहेहि कहेहि ।

कथय कथय ।

**पुरुषः**— अहके जालुग्गाळादिहिं मच्छबन्धणोपाएहिं कुडुम्बभळणं कळेमि ।

अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ।

**स्यालः**— (प्रहस्य) विसुद्धो दाणिं आजीवो ।

विशुद्ध इदानीमाजीवः ।

**पुरुषः**— भट्टा, मा एव्वं ।

सहजे किळ जे विणिन्दिए
ण हि तक्कम्म विवज्जणिज्जए ।
पशुमाळणकम्मदाळुणे
अणुकम्पामिदु एव्व शोत्तिए ॥

भर्तः, मैवम् ।

सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।

---

आवुत्तः स्यालः । जालमानायः । 'आनायः पुंसि जालं स्यात्' इत्यमरः । मत्स्यान्निगृह्य तैरित्यर्थादायाति । आजीवः जीवसाधनम् । विशुद्ध इति विपरीतलक्षणा ; निकृष्ट इत्यर्थः । तथापि न त्याज्य

पशुमारणकर्मदारुणः अनुकम्पामृदुरेव श्रोत्रियः ॥ १ ॥

**स्यालः**— तदो तदो ।

ततस्ततः ।

**पुरुषः**— अह एक्कदिअशे खण्डशो ळोहिअमच्छे मए कप्पिदे । तदा तश्श उदळब्भन्तळे इदं ळअणभाशुळं अङ्गुळीअअं देक्खिअ पच्छा शे विक्कआअ दंशअन्ते गहिदे भावमिश्शेहिं । माळेह वा मुञ्चेह वा । इअं शे आअदी ।

अथ एकदिवसे खण्डशो लोहितमत्स्यो मया कल्पितः । तदा तस्योदराभ्यन्तरे इदं रत्नभासुरमङ्गुलीयकं दृष्ट्वा पश्चात्तस्य विक्रयाय दर्शयन् गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा । इयमस्यागतिः ।

**स्यालः**— जाणुअ, विस्सगन्धी गोघादी मच्छबन्धो एव्व । दाव णिस्संसअं अङ्गुलीअअं से विमरिसिदव्वं । राअउळं एव्व गच्छम्हो ।

जानुक, विस्रगन्धी गोखादी मत्स्यबन्ध एव । तावन्नि-

---

इत्याह— **सहजमिति** । एवेति भिन्नक्रमः, दारुण एवेति । अर्थान्तरन्यासोऽत्रालंकारः ॥

स्संशयमङ्गुलीयकमस्य विमर्शनीयम् । राजकुलमेव गच्छामः ।

**रक्षिणौ**— तह । गच्छ अळे गण्डभेदिअ ।

तथा । गच्छ अरे गाण्डभेदिक ।

[इति सर्वे परिक्रामन्ति ।

**स्यालः**-- सूअअ, इमं गोपुरदुवारे अप्पमत्ता पडिपालह । जाव इदं अङ्गुळीअअं जहागमणं भट्टिणो णिवेदिअ तदो सासणं पडिच्छिअ णिग्गमामि ।

सूचक, अमुं गोपुरद्वारे अप्रमत्तौ प्रतिपालयतम् । यावदिदमङ्गुलीयकं यथागमनं भर्त्रे निवेद्य ततः शासनं प्रतिगृह्य निर्गच्छामि ॥

**उभौ**-- पविशदु अज्जो शामिपशादाअ ।

प्रविशत्वार्यः स्वामिप्रसादाय ।

[ निष्क्रान्तः स्यालः ।

**प्रथमः**— जाणुअ, चिळाअदि खु आवुत्ते ।

जानुक, चिरायते खल्वावुत्तः ।

---

विस्रगन्धी । 'विस्रं स्यादामगन्धि यत्' इत्यमरः । गोखादी मांसाद इत्युपदेशः । मत्स्यबन्धः दाशः । सत्यमनेनोक्तमिति भावः । तावत् तस्मात् । गाण्डभेदिकः गण्डभेदमर्हतीति गाण्डभेदिकः ॥

**द्वितीयः**— णं अवशलोपशप्पणीआ लाआणो ।

नन्ववसरोपसर्पणीया राजानः ।

**प्रथमः**— जाणुअ, फुळन्ति मे हत्था इमश्श वज्झशुमणशं पिणद्धुं ।

जानुक, स्फुरतो मे हस्तावमुष्य वध्यसुमनसं पिनद्धुम् ।

[इति पुरुषं निर्दिशति ।

**पुरुषः**— णालुहदि भावे अकाळणमाळणे होदुं ।

नार्हति भावोऽकारणमारणो भवितुम् ।

**द्वितीयः**— (विलोक्य) एशे अह्माणं शामी ळेहपत्थे गहिअ राअशाशणं आअच्छदि । शुणो मुहं वा दक्खिश्शदि गिद्धबली वा भविश्शदि ।

एषोऽस्माकं स्वामी लेखपत्रे गृहीत्वा राजशासनमागच्छति । शुनो मुखं वा द्रक्ष्यति गृध्रबलिर्वा भविष्यति ।

(प्रविश्य)

**स्यालः**— सूअअ, मुञ्चीअदु एसो जालोवजीवी । उववण्णो

---

स्फुरतः प्रसरतः । वध्यसुमनसं वध्यचिह्नभूतां मालाम् । गृध्रबलिर्वा भविष्यति, अयमिति शेषः ; अस्य वधमात्रं वा शूलाधिरो-

किळ से अङ्गुळीअस्स आअमो ।

सूचक, मुच्यतामेष जालोपजीवी । उपपन्नः किलास्याङ्गुलीयस्यागमः ।

**प्रथमः**— जह भणादि भवं । जाणुअ, एशे जमशदणं देक्खिअ पडिणिवुत्ते ।

यथा भणति भवान् । जानुक, एष यमसदनं दृष्ट्वा प्रतिनिवृत्तः ।

[इति पुरुषं परिमुक्तबन्धनं करोति ।

**पुरुषः**— (स्यालं प्रणम्य) भट्टा, तवकेरअं मे जीविदं ।

भर्तः, तवकेरकं मे जीवितम् ।

**स्यालः**— एसो भट्टिणा अङ्गुळीअअमुळ्ळसम्मिदो पारितोसिओ दिण्णो ।

एष भर्त्राङ्गुलीयकमूल्यसंमितः पारितोषिको दत्तः ।

[इति पुरुषाय स्वं प्रयच्छति ।

**पुरुषः**— (सप्रणामं प्रतिगृह्य) भट्टाळएण अणुगहीदम्हि ।

भट्टारकेणानुगृहीतोऽस्मि ।

---

पणं वा भविष्यतीत्यर्थः । मुच्यतामेष जालोपजीवी । कुत इत्याह— उपपन्नः किलास्याङ्गुलीयस्यागमः, अतोऽयं न चोरः । तवकेरकं त्वदीयम् । पारितोषिकः अर्थः । भट्टारक इति पूज्यवाची ॥

**सूचकः**— दे णाम अणुगहीदा, जे शूलादो अवदारिअ हत्थिक्कन्धे पडिट्ठाविदा ।

ते नामानुगृहीताः, ये शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापिताः ।

**जानुकः**— आवुत्त, रण्णो परितोसं कहेहि । तेण खु अ-ङ्गुळीएण भट्टिणो सम्मदेण होदव्वम् ।

आवुत्त, राज्ञः परितोषं कथय । तेन खल्वङ्गुलीयेन भर्तुः शर्मदेन भवितव्यम् ।

**स्यालः**— ण तस्सिं महारुहं रअणं भट्टिणो बहुमदंत्ति त-क्केमि । तस्स दंसणेण किंवि अभिमदं भट्टिणो सुमरिदं । मुहुत्तअं पकिदिगंभीरो वि पज्जुस्सुअमणा आसि ।

न तस्मिन् महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शनेन किमप्यभिमतं भर्तुः स्मृतम् । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकमना आसीत् ।

**सूचकः**— सेविदं णाम आवुत्तेण ।

सेवितं नामावुत्तेन ।

---

नामानुगृहीताः । नामेत्यवधारणे ॥

**स्यालः—** णं भण इमस्श किदे मच्छशत्तुणात्ति ।

ननु भणामुष्य कृते मत्स्यशत्रोरिति ।

[इति पुरुषमसूयया पश्यति ।

**पुरुषः—** इदो अद्धं भट्टारअ तुह्माणं सुमणोमुळ्ळं होदु ।

इतोऽर्धं भट्टारक, युष्माकं सुमनोमूल्यं भवतु ।

**जानुकः—** एदं जुज्जइ ।

एतद्युज्यते ।

**स्यालः—** धीवर, महत्तरो पिअवअस्सो दाणिं संवुत्तो । ता कादम्बरीसक्खिअं अम्हाणं पढमसोहिदं इच्छीअदि । ता सुण्डिआभवणं एव्व पविसामो ।

धीवर, महत्तरः प्रियवयस्य इदानीं संवृत्तः । तस्मात् कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते । तस्माच्छुण्डिकाभवनमेव गच्छामः ।

[इति निष्क्रान्ताः सर्वे ।

॥ प्रवेशकः ॥

---

कादम्बरी मद्यम् । शुण्डिका तत्संपादयित्री ॥

( ततः प्रविशत्याकाशयानेन सानुमती नामाप्सराः । )

**सानुमती**— णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसण्णिज्झं, जाव साहुजणस्स अभिसेअकालोत्ति । संपदं इमस्स राएसिणो उदन्तं पच्चक्खीकरिस्सं । मेणआसंबन्धेण सरीरभूदा दाणिं मे सउंदला । ताए तण्णिमित्तं आदिट्ठम्हि । (समन्तादवलोक्य) किं णु खु उच्छवे वि णिरुच्छवारम्भं विअ एदं राअकुलं दीसइ ।

---

एवं राज्ञोऽङ्गुलीयस्य दर्शनं तेन तत्क्षणात् । मुनिशापनिवृत्तिश्च कान्तायाः स्मरणं ततः ॥ एतानि सूचितान्यत्र प्रवेशे सूच्यतेऽधुना । तस्यैवानन्तरावस्था पात्रैरङ्कमुखोदितैः ॥ तत इति । संत्यक्ता सा प्रियेणैवमनुयान्ती पुरोहितम् । कयाचिद्दिव्यया नीता मारीचस्य तपोवनम् ॥ शुश्रूषमाणया तत्र तत्पत्नीं दक्षसंभवाम् । मात्रा मेनकया सार्धं न्यवसत्सा तपोवने ॥ मारीचस्याश्रमे तत्र निवसन्ती शकुन्तला । असूत तनयं साध्वी दिक्प्राचीव दिवाकरम् ॥ सुतेन सह सा तत्र निवसन्ती कदाचन । आसीद्वसन्तसमये प्रेयोविरहविह्वला ॥ विवशा साप्सरस्तीर्थसांनिध्यं कर्तुमुद्यताम् । सखीं सानुमतीं नाम संदिदेश समुत्सुका ॥ प्रविश्य हस्तिनपुरं सखि सानुमति त्वया । मम प्रियतमोदन्तः प्रत्यक्षीक्रियतामिति ॥ निर्वर्तितस्वकार्यैवं तयादिष्टा सुराङ्गना । विशन्ती हस्तिनपुरं प्राह— **णिव्वत्तिदं** इति । पर्यायनिर्वर्तनीयं पर्यायेण अप्सरोभिः वारक्रमेण

अत्थि खु मे विहवो णिज्झाणेण सव्वं परिण्णादुम्। किं दु सहीए आदरो माणइदव्वो। होदु, एदाणं दाव ऊज्जाणपाळिआणं तिरक्खरिणीपडिच्छण्णा पस्सपरिवत्तिणी भविअ उवळहिस्सम्। [नाट्येनावतीर्य स्थिता।

निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यम्, यावत्साधुजनस्याभिषेककाल इति। साम्प्रतमस्य राजर्षेरुदन्तं प्रत्यक्षीकरिष्यामि। मेनकासंबन्धेन शरीरभूतेदानीं मे शकुन्तला। तया तन्निमित्तमादिष्टास्मि। किं नु खलूत्सवेऽपि निरुत्सवारम्भमिवैतद्राजकुलं दृश्यते। अस्ति खलु मे विभवो निध्यानेन सर्वं परिज्ञातुम्। किं तु सख्या आदरो मानयितव्यः। भवतु, एतयोस्तावदुद्यानपालिकयोस्तिरस्करिणीप्रतिच्छन्ना पार्श्वपरिवर्तिनी भूत्वा उपलप्स्ये।

---

निर्वर्तनीयम्। उत्सवेऽपि उत्सवोचिते कालेऽपि। निध्यानेन दिव्यदृष्ट्या। 'निध्यानमवलोकनम्' इति वैजयन्ती। सख्या आदरो मानयितव्यः, मांसचक्षुषा प्रत्यक्षीकरणं हि शकुन्तलया संदिष्टं तत्तथा कर्तव्यमित्यर्थः। उद्यानपालिके दृष्ट्वाह– भवत्विति। तिरस्करिणीप्रतिच्छन्ना तिरस्करिण्या विद्यया प्रतिच्छन्ना॥

(ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी । अपरा च पृष्ठतस्तस्याः ।)

**प्रथमा**—

आतम्महरिअपण्डर जीविदसव्वं वसन्तमासस्स ।
दिट्ठीए चूदङ्कुर उदुमङ्गळ तुमं खु पेक्खामि ॥

आताम्रहरितपाण्डर जीवितसर्वं वसन्तमासस्य ।
दिष्ट्या चूताङ्कुर ऋतुमङ्गल त्वां खलु पश्यामि ॥ २ ॥

**द्वितीया**— सहि परहुदिए, किं एआइणी मन्तेसि ?

सखि परभृतिके, किमेकाकिनी मन्त्रयसे ?

**प्रथमा**— महुअरिए, चूदकळिअं देक्खिअ उम्मत्ता परहुदिआ होदि ।

मधुकरिके, चूतकलिकां दृष्ट्वा उन्मत्ता परभृतिका भवति ।

**द्वितीया**— (सहर्षं त्वरयोपगम्य) कहं उवट्ठिदो महुमासो ?

कथमुपस्थितो मधुमासः ?

**प्रथमा**— महुअरिए, तव दाणिं काळो विब्भमोग्गीदाणं ।

---

हरितं श्यामम् । जीवितसर्वं सर्वजीवितम् । वसन्तमासस्य मधुमासस्य । पश्यामि दृश्यबुद्ध्यावलोकयामि । किमेकाकिनी मन्त्रयसे, किमुन्मत्तासीति भावः । श्लेषवक्रोक्त्या प्रतिवक्ति– मधुकरिके इति ।

 


मधुकरिके, तवेदानीं कालो विभ्रमोद्गीतानाम् ।

**द्वितीया**— सहि, अवलंबेहि मं जाव णं अग्गपादट्ठिआ भविअ गहिअ कामदेवच्चणं करेमि ।

सखि, अवलम्बस्व माम्, यावदेनमग्रपादस्थिता भूत्वा गृहीत्वा कामदेवार्चनं करोमि ।

**प्रथमा**— जइ मह वि अद्धं अच्चणफळस्स ।

यदि ममाप्यर्धमर्चनफलस्य ।

**द्वितीया**— अभणिए वि एव्वं एदं सम्पज्जइ । जदो एक्कं एव्व जीविदं, दुधा दिट्ठं सरीरं ।

[सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णाति ।

अम्महे अप्पडिबुद्धो वि चूदप्पसवो एत्थ बन्धणभङ्गे सुरभी होदि ।

( कपोतकं कृत्वा )

**तुं सि मए चूदङ्कुर**

**दिण्णो कामस्स गहिदधणुअस्स ।**

---

ननु त्वं हि परभृतिका कोकिला इति । मधुकरिके इति । अत्रापि पूर्ववद्वक्रोक्तिः । यदि ममाप्यर्धमर्चनफलस्य तर्ह्यवलम्ब इति भावः । अम्महे आश्चर्यम् । अप्रतिबुद्धः अविकसितः । बन्धनम् 'वृन्तं प्रसवबन्धनम्' इत्यमरः । कपोतकं अञ्जलिम् । त्वमसीति ।

पथिअजणजुवइळक्खो

पञ्चब्भहिओ सरो होहि ॥

अभणितेऽप्येवमेतत्संपद्यते । यत एकमेव जीवितम्, द्विधा दृष्टं शरीरम् । अम्महे अप्रतिबुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गे सुरभिर्भवति ।

त्वमसि मया चूताङ्कुर

दत्तः कामाय गृहीतधनुषे ।

पथिकजनयुवतिलक्ष्यः

पञ्चाभ्यधिकः शरो भव ॥ ३ ॥

[इति चूताङ्कुरं प्रक्षिपति ।

(प्रविश्यापटीक्षेपेण)

**कञ्चुकी—** मा तावत् । अनात्मज्ञे, देवेन प्रतिषिद्धे वसन्तोत्सवे किमाम्रकलिकाभङ्गमारभसे ?

(उभे भीते ।)

**उभे—** पसीददु अज्जो । अगहीदत्थाओ वअं ।

प्रसीदत्वार्यः । अगृहीतार्थे आवाम् ।

---

अर्चनमन्त्रमेतत् । मा तावत्, विरुद्धमेतदित्यर्थः । किं तदित्याह— देवेनेति । कलिका मञ्जरी । अज्ञानादेवं कृतमित्याह— प्रसीदत्विति ॥

**कञ्चुकी**— न किल श्रुतमाभ्याम्। यदा वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिः पत्रिभिश्च। तथा हि—

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
संनद्धं यदपि स्थितं कुरवकं तत्कोरकावस्थया।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम्॥

**सानुमती**— ण एत्थ सन्देहो। महप्पहावो राएसी।
नात्र संदेहः। महाप्रभावो राजर्षिः।

**उभे**— अज्ज, कतिइं दिअहाइ अम्हाणं मित्तावसुणा रट्ठिएण भट्टिणो पाअमूलं पेसिदाणं। पमदवणस्स सअळं

---

अज्ञानस्यासंभावनामाह— **न किलेति**। किलेत्यसंभावनायाम्। 'वार्तासंभाव्ययोः किल' इत्यमरः। कुत इत्याह— यदेति। यदा यदित्यर्थः। तरुभिः अचेतनैरपि तदाश्रयिभिः पुंस्कोकिलादिभिः॥

उक्तमुपपादयति— **तथा हीत्यादिना**। रजो न बध्नाति, न विकसतीत्यर्थः। संनद्धं विकसितुं यत् कुरवकं संनद्धं तत् कोरकावस्थया स्थितमित्यन्वयः। कलिकेति कुरवकमिति च जातावेकवचनम्। अत्र स्मरावस्थायाम्। कुत इत्याह— महाप्रभाव इति॥

पडिक्कम्म अप्पिदं । तं आअन्तुअदाए ण सुदपुव्वो अम्हेहिं एसो वुत्तन्तो ।

आर्य, कतिचिद्दिवसा आवयोर्मित्रावसुना राष्ट्रियेण भर्तुः पादमूलं प्रेषितयोः । प्रमदवनस्य सर्वं प्रतिकर्मार्पितम् । तस्मादागन्तुकतया न श्रुतपूर्व आवाभ्यामेष वृत्तान्तः ।

**कञ्चुकी**— भवतु, न पुनरेवं प्रतिवर्तितव्यम् ।

**उभे**— अज्ज, कोदूहळं णो । जइ इमिणा जणेण सोदव्वं, कहेदु अज्जो– किंणिमित्तं भट्टिणा वसन्तूसवो पडिसिद्धो ।

आर्य, कौतूहलमावयोः । यद्यमुना जनेन श्रोतव्यम्, कथयत्वार्यः– किं निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः ।

**सानुमती**— ऊसवप्पिआ खु माणुसा । ता गुरुणा काळणेण होदव्वम् ।

---

उत्सवप्रतिषेधस्य श्रवणे संगतिमाह— **आर्येति** । कतिचित् द्वित्राः । राष्ट्रियेण राष्ट्रे नियुक्तेन । प्रतिकर्म उत्कर्षाधानम् । **न पुनरिति** । प्रतिवर्तितव्यं प्रवर्तितव्यम् । कौतूहलमावयोः, अस्तीति शेषः । कथयत्वार्यः, तर्हीत्यर्थात् । किं जिज्ञासितमित्याह— **किं निमित्तमिति** ॥

उत्सवप्रियाः खलु मनुष्याः । तद्गुरुणा कारणेन भवितव्यम् ।

**कञ्चुकी**— बहुलीभूतमेतत् किं न कथ्यते? किमत्रभवत्योः कर्णपथं न तदायातं शकुन्तलाप्रत्यादेशकौलीनम् ?

**उभे**— अम । सुदं रट्ठिअमुहादो जाव अंगुळीअदंसणं ।

आम । श्रुतं राष्ट्रियमुखात् यावदङ्गुलीयदर्शनम् ।

**कञ्चुकी**— तेन ह्यल्पं कथयितव्यम् । यदैव खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा मया तत्रभवती रहसि शकुन्तला मोहात् प्रत्यादिष्टेति, तदाप्रभृत्येव पश्चात्तापमुपगतो देवः ।

**रम्यं द्वेष्टि यथापुरं प्रकृतिभिर्न प्रत्यहं सेव्यते**
**शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।**
**दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा**
**गोत्रेषु स्खलितस्तदा भवति च व्रीडावनम्रश्चिरम् ॥**

---

बहुलीभूतं व्याप्तम् । कौलीनं जनवादः । आम इत्यनुमतौ ॥

रम्यमिति । लोके यद्यदाह्लादकं भोग्यवस्तु तत्तद्द्वेष्टि उद्वेजकत्वात् । यथापुरं पूर्ववत् । दाक्षिण्येन पूर्वकृतानुपालनात्मना । उचितामभ्यस्ताम् । गोत्रेषु नामसु ॥

**सानुमती**— पिअं मे पिअं मे ।

प्रियं मे प्रियं मे ।

**कञ्चुकी**— तस्मात् प्रभवतो वैमनस्यादुत्सवप्रत्याख्यानम् ।

**उभे**— जुज्जइ ।

युज्यते ।

(नैपथ्ये)

एदु एदु भवं । एत्वेतु भवान् ।

**कञ्चुकी**— (कर्णं दत्त्वा) अये इत एवाभिवर्तते देवः । स्वकर्मानुष्ठीयताम् ।

**उभे**— तह ।

तथा । [इति निष्क्रान्ते ।

(ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकश्च प्रतीहारी च ।)

**कञ्चुकी**— (राजानमवलोक्य) अहो सर्वावस्थासु रमणीयत्वमाकृतिविशेषाणाम् । तथा हि एवमुत्सुकोऽपि प्रियदर्शनो देवः ।

**प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं**
**बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः ।**

---

प्रत्यादिष्टेति । उपरक्तः ऊनरागः । तेजोगुणात् स्वाभाविकस्य

चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥

**सानुमती**— (राजानं दृष्ट्वा) ठाणे खु इमस्स किदे सउन्दळा किळमदि ।

स्थाने खल्वमुष्य कृते शकुन्तला क्लाम्यति ।

**राजा**— ( ध्यानमन्दं परिक्रम्य )

प्रथमं सारङ्गाक्ष्या
प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं
हतहृदयं संप्रति विबुद्धम् ॥ ७ ॥

---

तेजसो बाहुल्यात् । उल्लिखितः उत्तेजितः । नालक्ष्यते दृष्टिप्रतिघातात् । अत्र निद्राच्छेदतनुताविषयनिवृत्तयः सूचिताः, चिन्तानिःश्वासग्लान्यभूषणादि च ॥

इदानीमुन्मादावस्था प्रारभ्यते । तस्याकृतेर्लोकोत्तरगुणविशिष्टत्वमवधार्याह— **स्थाने इति** ॥

एवं मुद्रालोकात्संस्मृतनिजवल्लभापरित्यागः । हृदयमुपालभते स्वं पश्चात्तापेन परवशो राजा— **प्रथममिति** । प्रथमं प्रियतमासमागमसुखानुभवे समुपनते सति । सुप्तं जडम् अनुन्मेषम् । सारङ्गाक्ष्येति, तदानीं तदवस्थास्मरणानुभवः । **अनुशयदुःखाय** अनुशयः पश्चात्तापः

**सानुमती**— णं ईरिसाइं तवस्सिणीए भाअहेआइं ।

नन्वीदृशानि तपस्विन्या भागधेयानि ।

**विदूषकः**-- ( अपवार्य ) ळंघिदो एसो भूओ वि सउन्दळावाहिणा । ण आणे कहं चिइस्सिदव्वो भविस्सदित्ति ।

लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना । न जाने कथं चिकित्सितव्यो भविष्यतीति ।

**कञ्चुकी**--- ( उपगम्य ) जयतु देवः । महाराज, प्रत्यवेक्षिताः प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि महाराजः ।

**राजा**-- वेत्रवति, मद्वचनादमात्यमार्यपिशुनं ब्रूहि— चिरप्रबोधान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुम् । यत्प्रत्यवेक्षितं पौरकार्यमार्येण तत्पत्रमारोप्य दीयतामिति ।

**प्रतीहारी**-- जं देवो आणवेदि ।

यद्देव आज्ञापयति ।

[इति निष्क्रान्ता ।

---

अनुशयदुःखमनुभवितुम् । हतम् अस्पृष्टसुकृतगन्धम् । संप्रति तस्यामसुलभदर्शनायाम् । विबुद्धं सोन्मेषम् । अत्र निर्वेदाख्यो व्यभिचारी व्यज्यते । ईदृशानि अतिमहान्ति । भागधेयानि इति कार्ये कारणोपचारः । नन्वीदृशोऽस्य तस्यामनुराग इत्यर्थः ॥

**राजा**— वातायन, त्वमपि नियोगमशून्यं कुरु ।

[निष्क्रान्तः काञ्चुकीयः ।

**विदूषकः**— किदं भवदा णिम्मक्खिअम् । सम्पदं सिसिरावच्छेदरमणिज्जे इमस्सिं पमदवणुद्देसे सुहं अत्ताणं रमइस्ससि ।

कृतं भवता निर्मक्षिकम् । साम्प्रतं शिशिरावच्छेदरमणीयेऽमुष्मिन् प्रमदवनोद्देशे सुखमात्मानं रमयिष्यसि ।

**राजा**— रन्ध्रोपनिपातिनो विनिपाता इति यदुच्यते, तदव्यभिचारि वचः । कुतः ?

**मुनिसुताप्रणयस्मृतिरोधिना**
**मम च मुक्तमिदं तमसा मनः ।**
**मनसिजेन सखे प्रहरिष्यता**
**धनुषि चूतशरश्च निवेशितः ॥ ८ ॥**

---

शिशिरावच्छेदः वसन्तारम्भः । सुखम् अश्रमेण । आत्मानं मनः । रन्ध्रे छिद्रे । अव्यभिचारि सत्यम् ॥

**मुनिसुतेति** । प्रणयः परिचयः । तमसा अज्ञानेन । अत्र च-शब्दौ भिन्नक्रमौ क्रिययोर्यौगपद्यं द्योतयतः । तेनोत्कण्ठायर

**विदूषकः**— चिट्ठ दाव । इमिणा दण्डकट्ठेण कन्दप्पवाहिं णासेमि ।

तिष्ठ तावत् । अनेन दण्डकाष्ठेन कन्दर्पव्याधिं नाशयामि ।

**राजा**— (सस्मितम्) भवतु, दृष्टं ब्रह्मवर्चसम् । सखे, क्वोपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ?

**विदूषकः**— णं आसण्णपरिआरिआ भवदा सन्दिट्ठा— माहवीमण्डवे इमं वेळं अदिवाहइस्सं, तहिं मए चित्तफळए सहत्थळिहिदं तत्तहोदीए सउन्दळाए पडिकिदिं आणअत्ति ।

नन्वासन्नपरिचारिका भवता संदिष्टा— माधवीमण्डप इमां वेलामतिवाहयिष्यामि, तत्र मया चित्रफलके स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति ।

---

दुर्विषहत्वं व्यज्यते । समुच्चयोऽत्रालंकारः । 'गुणक्रियायौगपद्यं समुच्चयः' इति । अतिशयोक्तिश्च । 'कार्यकारणयोः समकालत्वे पौर्वापर्यविपर्यये चातिशयोक्तिः' इति । अत्र समकालत्वम् ॥

ब्रह्मवर्चसं ब्राह्मं तेजः । विनोदस्थलं पूर्वमेव निर्णीतमित्याह— नन्विति । आसन्ना अन्तःपुरकार्येष्वभ्यन्तरा । संदेशप्रकारमाह—

**राजा**— ईदृशं हृदयविनोदस्थानम् । तत्तमेव मार्गमादेशय ।

**विदूषकः**— इदो इदो भवं ।

इत इतो भवान् ।

[इति परिक्रामतः । सानुमती अनुगच्छति ।

**विदूषकः**— एसो मणिसिळापट्टअसणाहो माहवीळदामण्डवो उवआररमणिज्जदाए णिस्संसअं साअदेण विअ णो पडिपाळेदि । ता पविसिअ णिसीददु भवं ।

एष मणिशिलापट्टकसनाथो माधवीलतामण्डप उपचाररमणीयतया निःसंशयं स्वागतेनेव नः प्रतिपालयति । तत् प्रविश्य निषीदतु भवान् ।

[उभौ प्रविश्योपविशतः ।

**सानुमती**— ळदादंसिदा दक्खिस्सं दाव सहीए पडिकिदिम् । तदो से भत्तुणो बहुमुहं अणुराअं णिवेदइस्सम् ।

लतादंशिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम् । ततोऽस्या भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि ।

[तथा कृत्वा स्थिता ।

---

माधवीति । दंशिता कवचिता, लतातिरोहितेति यावत् । 'संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः' इत्यमरः ॥

**राजा**— सर्वमिदानीं स्मरामि शकुन्तलायाः पूर्ववृत्तान्तम् । कथितवानस्मि भवते च । स भवान् प्रत्यादेशवेलायां मत्सकाशमुपगतो नासीत् । पूर्वमपि न त्वया कदाचित् संकथासु कीर्तितं तत्रभवत्या नामापि । कच्चिदहमिव विस्मृतवांस्त्वमपि ?

**विदूषकः**— ण विसुमरामि । किन्दु सव्वं कहिअ अवसाणे तुए परिहासविअप्पो एसो ण भूदत्थत्ति आचक्खिदम् । मए मिप्पिण्डबुद्धिणा तं तह एव्व गहीदम् । अहवा भविदव्वदा बळवई ।

न विस्मरामि । किं तु सर्वं कथयित्वावसाने त्वया परिहासविजल्प एष न भूतार्थ इत्याख्यातम् । मया मृत्पिण्डबुद्धिना तत्तथैव गृहीतम् । अथ वा भवितव्यता बलवती ।

**सानुमती**— एव्वं एदं ।

एवमेतत् ।

**राजा**— (ध्यात्वा) सखे, परित्रायस्व माम् ।

---

परिहासविजल्प एष न भूतार्थ इत्याख्यातम्, 'परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः' इति । मृत्पिण्डबुद्धिना मृत्पिण्डमिव बुद्धिर्यस्य तेन ॥

**विदूषकः**— भो किं एदं? अणुववण्णं खु ईरिसं तुइ। कदा णु खु सप्पुरुसा सोअप्पत्तव्वा होन्ति? णं पवादे वि णिक्कम्पा गिरओ।

भोः, किमेतत्? अनुपपन्नं खल्वीदृशं त्वयि। कदा नु सत्पुरुषाः शोकप्राप्तव्या भवन्ति? ननु प्रवातेऽपि निष्कम्पा गिरयः।

**राजा**— वयस्य, निराकरणविक्लबायाः प्रियायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि। सा हि,

**इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता**
**स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।**
**पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती**
**मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम्॥**

---

संतापातिशयमसहमान आह— सखे इति। शोकस्य कारणमाह—वयस्येति॥

इत इति। उच्चैरित्यनेन कोपो व्यज्यते। गुरुसम इत्यनेन वचनस्यालङ्घनीयत्वं च। क्रूर इत्यनेन निर्वेदश्च। यदिति दृष्ट्यर्पणलक्षणवाक्यार्थपरामर्शी, अर्पिता दृष्टिरिति पर्यवस्यति। विशिष्टाया दृष्टेरेव विशिष्टशल्यसाम्यं स्यात्॥

**सानुमती**— अम्हो ईरिसी सकज्जवरदा ! इमस्स सन्दावेण अहं रमामि ।

अहो ईदृशी स्वकार्यपरता ! अस्य संतापेनाहं रमे ।

**विदूषकः**— अत्थि मे तक्को, केण वि तत्तहोदी आआसआरिणा अवणीदत्ति ।

अस्ति मे तर्कः, केनापि तत्रभवत्याकाशचारिणापनीतेति ।

**राजा**— कः पतिदेवतामन्यः परामष्टुमुत्सहेत । मेनका किल सख्यास्ते प्रतिष्ठेति श्रुतवानस्मि । तत्सहचारिणीभिः सखी ते हृतेति हृदयमाशङ्कते ।

**सानुमती**— सम्मोहो खु विम्हअणीओ ; ण पडिरोहो ।

संमोहः खलु विस्मयनीयः ; न प्रतिरोधः ।

**विदूषकः**— जइ एव्वं अत्थि खु समाअमो काळेण मए विदिदो तत्तहोदीए ।

---

स्वकार्यपरतया । स्वकार्यं शकुन्तलाश्वासनम् । किं तदित्याह— अस्येति । आकाशचारिणापनीतेति ; तत्रेत्याह— **मेनकेति** । प्रतिष्ठा जन्मकारणम् । संमोहः उन्मादावस्था । विस्मयनीयः वस्तुवृत्तप्रतिभानात् । न प्रतिरोधः, स्वदारान् प्रति परदारत्वप्रतीतेः ॥

यद्येवमस्ति खलु समागमः कालेन मया विदित-स्तत्रभवत्याः ।

**राजा**— कथमिव ?

**विदूषकः**— ण खु मादापिदरा भत्तुविओअदुःखिअं दुहिदरं चिरं पेक्खिदुं पारेन्ति ।

न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं चिरं प्रेक्षितुं पारयतः ।

**राजा**— वयस्य,

**स्वप्नो नु माया नु मतिभ्रमो नु**
**क्लिष्टं नु तावत्फलमेव पुण्यम् ।**
**असंनिवृत्त्यै तदतीतमेते**
**मनोरथा नाम तटप्रपाताः ॥ १० ॥**

---

विदितः ऊहितः । कथमित्याह— न खल्विति । अतो मेनका तां त्वया संयोजयिष्यति इत्यर्थः ।।

तन्नेत्याह— **स्वप्नो न्विति** । असंनिवृत्त्यै अतीतम् । तदित्यनुभूतदयितासमागमसुखपरामर्शि ; तस्य न संनिवृत्तिरित्यर्थः । उक्तमर्थं संदेहैर्द्रढयति । स्वप्नो नु स्वाप्नं वस्तु नु । माया नु ऐन्द्रजालिकादिनिर्मितं वस्तु नु । मतिभ्रमो नु मतिभ्रमात् प्रतीतं वस्तु नु । यथा

**विदूषकः**— मा एव्वं । णं अङ्गुलीअअं एव्व णिदंसणं अवस्संभाविणो अचिन्तणिज्जो समाअमो होदित्ति ।

मैवम् । नन्वङ्गुलीयकमेव निदर्शनम् अवश्यंभाविनोऽचिन्तनीयः समागमो भवतीति ।

**राजा**— अये ! इदं तावदसुलभपदभ्रंशि शोचनीयम् ।

**तव सुचरितमङ्गुलीय नूनं**
**प्रतनु ममेव विभाव्यते फलेन ।**
**अरुणनखमनोहरासु तस्या-**
**श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ ११ ॥**

---

रज्ज्वां सर्पः। क्लिष्टं क्षीणम्। तावत्फलं यावत् क्षयफलम्। फलभोगेन क्षीणं पुण्यं न्वित्यर्थः। एवमतीतस्य तस्यासंनिवृत्तिं संदेहैरुपपाद्य तस्यात्ययं विशेषरूपं सामान्येनोपपादयति— एत इति। एते लोके दृश्यमानाः। मनोरथाः मनोरथफलानि। तटप्रपाताः तटस्य नदीकूलस्य प्रपात इव झटिति प्रपातो येषां ते तथा। प्रपातो विनाशः नद्यां पतनं च। नाम प्रसिद्धौ। अत्र संदेहोऽर्थान्तरन्यासश्च। **भवतीति**। अत्रेति शेषः। निदर्शनं दृष्टान्तः। उन्मादावस्थामुपगतः प्रसङ्गादङ्गुलीयकमचेतनं चेतनवदनुशोचति— **इदमिति**। असुलभेति। असुलभं सुकृतशतलभ्यम्। **तवेति**। प्रतनु अत्यल्पम्। विभाव्यते अनुमीयते। फलमाह— अरुणेति।

**सानुमती**— जइ अण्णहत्थगअं भवे, सच्चं एव्व शोअणिज्जां भवे ।

यद्यन्यहस्तगतं भवेत्, सत्यमेव शोचनीयं भवेत् ।

**विदूषकः**— भो, इअं णाममुद्दा केण उवाएण तत्तहोदीए हत्थसंसग्गं पाविदा ।

भोः, इयं नाममुद्रा केनोपायेन तत्रभवत्या हस्तसंसर्गं प्रापिता ।

**सानुमती**— मम वि कोदूहळेण आआरिदो एसो ।

ममापि कौतूहलेनाकारित एषः ।

**राजा**— श्रूयताम् । तदा स्वनगराय मां प्रस्थितं प्रिया सबाष्पमिदमाह 'कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यति' इति ।

**विदूषकः**— तदो तदो ।

ततस्ततः ।

---

अरुणेत्यनेन परभागलाभो व्यज्यते । तस्या अङ्गुलीषु लब्धपदं त्वं ततश्च्युतमसीति यदित्यन्वयः । अङ्गुलीयकमिदानीमप्युन्नतपदे स्थितमतो न शोचनीयमित्याह— यद्यन्यहस्तगतं भवेत् । तर्हीत्यर्थात् । आकारितः अङ्कुरितः । एषः प्रश्नः । श्रूयताम् अवहितो भवेत्यर्थः । प्रतिपत्तिं प्राप्तिम् ॥

**राजा**— पश्चादिमां नाममुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता ।

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छति यावदन्तम् ।
तावत्प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥ १२ ॥

तच्च तथा दारुणेन मया मोहान्नानुष्ठितम् ।

**सानुमती**— रमणीअं खु ववही विहिणा सम्पादिओ ।

रमणीयं खलु व्यवधिर्विधिना संपादितः ।

**विदूषकः**— कहं णु धीवळकप्पिदस्स ळोहिअमच्छस्स उदळब्भन्तळे आसी ?

कथं नु धीवरकल्पितस्य लोहितमत्स्यस्योदराभ्यन्तरे आसीत् ?

**राजा**— शचीतीर्थं वन्दमानायाः किल सख्यास्ते हस्तात् गङ्गास्रोतसि परिभ्रष्टम् ।

---

अभिधानप्रकारमाह— **एकैकमिति** । मोहात् विस्मरणात् । व्यवधिः व्यवधानं तिरोधानम् । एवंविधस्यानुरागस्य विस्मारकम् । विधिना प्रतिकूलेन । **शचीतीर्थमिति** । शचीदेव्यास्तत्र सांनिध्यात् ॥

**विदूषकः**— जुज्जइ ।

युज्यते ।

**सानुमती**— अदो तवस्सिणीए सउन्दळाए अधम्मभीरुणो इमस्स परिणए सन्देहो । अहवा ण ईरिसो अणुराओ अहिण्णाणं अवेक्खदि । कहं विअ एदम् ?

अतस्तपस्विन्याः शकुन्तलाया अधर्मभीरोरमुष्य परिणये संदेहः । अथवा नेदृशोऽनुरागोऽभिज्ञानमपेक्षते । कथमिवैतत् ?

**राजा**— उपालप्स्ये तावदिदमङ्गुलीयकम् ।

**विदूषकः**— (अपवार्य) गहिदो णेण पन्था उम्मत्तआणम् ।

गृहीतोऽनेन पन्था उन्मत्तानाम् ।

**राजा**—

**कथं नु तं कोमलबन्धुराङ्गुलिं**
**करं विहायासि निमग्नमम्भसि ।**

---

अतः अङ्गुलीयकदर्शनात् । अथ वेति, तन्नेत्यर्थः । कुत इत्याह— नेदृशोऽनुराग इति । गृहीतोऽनेन पन्था उन्मत्तानाम्, अचेतनोपालम्भोपक्रमात् । कथं न्विति । बन्धुरं सुन्दरम् । अत्र गुणनिरपेक्षत्वं व्यज्यते ॥

अथ वा—

अचेतनं नाम गुणानपेक्षते

मयैव कस्मादवधीरिता प्रिया ॥ १३ ॥

**विदूषकः**— अहं खु बुभुक्खाए खादयिदव्वत्ति ।

अहं खलु बुभुक्षया खादयितव्य इति ।

**राजा**— अकारणपरित्यागानुशयपरितप्तहृदयस्तावदनुकम्प्य-तामयं जनः पुनर्दर्शनेन ।

(प्रविश्यापटीक्षेपेण)

**चतुरिका**— इअं चित्तगआ भट्टिणी ।

इयं चित्रगता भट्टिनी ।

[इति फलकं दर्शयति ।

---

अथ वेति । नेदमुपालम्भविषयमित्यर्थः । अहमेवोपालम्भविषय इत्याह— अचेतनमिति । नामेत्यसंभावनायाम् । अचेतनं गुणापेक्षीत्यसंभवि । मयैव गुणपक्षपातिना मयैव । मत्कर्तृकमवधीरणम् अनुचितमेव, अङ्गुलीयककर्तृकस्तदङ्गुलीत्यागस्तथा नेत्यर्थः ॥

कस्मादवधीरिता प्रियेत्यवधीरणे हेतुः पृष्ट इति तत्रायमत्र हेतु-रित्युत्तरमाह– **अहमिति** । इति अतो हेतोस्त्वयावधीरित इत्यर्थः । बुभुक्षाकर्तृकेण स्वकर्मकेण च खादनेन तस्या अतिशय उक्तः । अनुशयः पश्चात्तापः । भट्टिनी 'देवी कृताभिषेकायामितरासु तु भट्टिनी' इत्यमरः ॥

**विदूषकः**— (चित्रफलकमवलोक्य) साहु वअस्स, महुरसंठाणदंसणिज्जो भावाणुप्पवेसो । खलदि विअ मे दिट्ठी णिम्मुण्णदप्पदेसेसु ।

साधु वयस्य, मधुरसंस्थानदर्शनीयो भावानुप्रवेशः । स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु ।

**सानुमती**— अहो राएसिणो वत्तिआणिउणदा । जाणे मे सही अग्गदो वट्टइत्ति ।

अहो राजर्षेर्वर्तिकानिपुणता । जाने मे सखी अग्रतो वर्तत इति ।

**राजा**— वयस्य,

यद्यत्साधु न चित्रे स्यात्क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं रेखया किंचिदन्वितम् ॥

---

भावानुप्रवेशः चित्रम् । निम्नोन्नतप्रदेशेषु नाभिस्तनादिषु । वर्तिका तूलिका । चित्रगतप्रतिकृत्यपेक्षया प्रतिकृतेरतिशयमाह— यद्यदिति । चित्रे आलिख्यमानं यद्यत्साधु न स्यात् सम्यङ्नायाति तत्तदन्यथा पौनःपुन्येन प्रवृत्त्या साधु क्रियते । अत्र सामान्याद्विशेषः प्रस्तुतः प्रतीयते । मया चित्रे तस्या लावण्यं सर्वं संपादयितुं पौनःपुन्येन यत्नः कृतः तथापि रेखया चित्रेण तस्या लावण्यं किंचिदत्यल्पमेव अन्वितम् अनुगतम् । चित्रे अत्यल्पमे-

**सानुमती**— सरिसं एदं पच्छादावगुरुणो सिणेहस्स अण-वळेवस्स अ ।

सदृशमेतत् पश्चात्तापगुरोः स्नेहस्यानवलेपस्य च ।

**विदूषकः**— भो तिस्सो तत्तहोदीओ दीसन्ति । सव्वा दंसणिआओ । कदमा तत्तहोदी सउन्दळा ?

भोस्तिस्रस्तत्रभवत्यो दृश्यन्ते । सर्वा दर्शनीयाश्च । कतमा तत्रभवती शकुन्तला ?

**सानुमती**— अणाहिण्णो खु रूवस्स मोहदिट्ठी अअं जणो ।

अनभिज्ञः खलु रूपस्य मोघदृष्टिरयं जनः ।

**राजा**— त्वं तावत् कतमां तर्कयसि ?

**विदूषकः**— भो तक्केमि जा एसा सिढिळबंधुव्वन्तकुसुमेण केसन्तेण उब्भिण्णसेअबिन्दुणा वदणेण विसेसदो ओसरिदाहिं बाहाहिं अवसेअसिणिद्धतरुणपळ्ळवस्स चूदपादवस्स पस्से इसिपरिस्सन्ता विअ आळिहिदा एसा तत्तहोदी सउन्दळा, इदराओ सहीओ त्ति ।

भोस्तर्कयामि यैषा शिथिलबन्धोद्भ्रान्तकुसुमेन केशान्तेन उद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽवसृता-

  

भ्यां बाहाभ्यामवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता एषा तत्रभवती शकुन्तला, इतरे सख्यौ इति ।

**राजा**— निपुणो भवान् । अस्त्यत्र मे भावचिह्नम् ! कुतः ?

**स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः ।**
**अश्रु च कपोलपतितं लक्ष्यमिदं वर्तिकोच्छ्वासात् ॥**

---

वायातीत्यर्थः । बाहा बाहुः । अवसृतिः अवनतिः । केशान्तेनेत्यादावुपलक्षणे तृतीया । तर्कस्य साधुत्वात्तं श्लाघते— **निपुण इति** । निपुणत्वमुपपादयति— अस्त्यत्रेति । भावः अनुरागः । चिह्नस्य स्वरूपं दुरवबोधत्वं चाह— **स्विन्नेति** । विनिवेशः विन्यासस्थानम्, दृश्यत्वमलिनत्वोपपत्तेः । रेखाया आलेख्यस्य प्रान्तेषु उपान्तेषु मलिनः असितः । अत्राङ्गुलीनां विन्यासस्थानस्य मालिन्यात्तासां स्वेद ऊह्य इति भावः । तदपेक्षया अश्रु च लक्ष्यमिति समुच्चयः । कपोलाभ्यां पतितं कपोलपतितम् । लक्ष्यम् ऊह्यम् । वर्तिकोच्छ्वासात् वर्तिकासाध्याया रेखाया उच्छ्वासात् संश्लेषशैथिल्यात् । वर्तिकोच्छ्वासात् इदं कपोलपतितम् अश्रु च लक्ष्यमित्यन्वयः । अत्राङ्गुलीनां विन्यासस्थानमालिन्यात् स्वेद ऊह्यः । वर्तिकोच्छ्वासादश्रु च, ताभ्यां सात्त्विकविकाराभ्याम् अनुरागः, तेन स इति परंपरया तर्कः निपुणमतिसाध्य एव । अतो निपुणो भवानित्यर्थः ॥

चतुरिके, अर्धलिखितमिदं विनोदनस्थानमस्माभिः । गच्छ वर्तिकां तावदानय ।

**चतुरिका**— अज्ज माढव्व, ओलम्ब चित्तफळअं । जाव आअच्छामि ।

आर्य माढव्य, अवलम्बस्व चित्रफलकम् । यावदागच्छामि ।

**राजा**— अहमेवैतदवलम्बे ।

[इति यथोक्तं करोति । निष्क्रान्ता चतुरिका ।

**राजा**— अहं हि ।

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहु मन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान्मृगतृष्णिकायाम् ॥ १६ ॥

**विदूषकः**— (आत्मगतम्) एसो अत्तभवं णदिं अदिक्कमिअ मिअतिह्णिआए सङ्कन्तो । (प्रकाशम्) भो वअस्स,

---

साक्षादिति । प्रथमं मार्गे महानदीमुत्तीर्य गत्वा पश्चान्मृगतृष्णिकायां प्रणय इव पूर्वमुपनतां प्रियामपहाय चित्रार्पितायामस्यां बहुमान इत्यर्थः । सत्यमेतदिति स्वयमेवानुभवति ॥

अवरं किं एत्थ ळिहिदव्वम् ।

एषोऽत्रभवान् नदीमतिक्रम्य मृगतृष्णिकायां संक्रान्तः । भो वयस्य, अपरं किमत्र लिखितव्यम् ?

**सानुमती**— असंसअं जो जो पदेसो अहिरुइदो तं तं आळिहिदुकामो हवे ।

असंशयं यो यः प्रदेशोऽभिरुचितः तं तमालिखितुकामो भवेत् ।

**राजा**— श्रूयताम् ।

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥

**विदूषकः**— (आत्मगतम्) जइ अहं पेक्खामि तह पूरयिदव्वं णेण चित्तफळअं ळम्बकुच्चाणं तावसाणं कदम्बेहिं ।

यथाहं पश्यामि तथा पूरयितव्यमनेन चित्रफलकं

---

कार्येति । लिखितव्येत्यर्थः । पादाः पर्यन्तभूमयः । तामभितः तस्यास्तीरे । पादविशेषणाभ्यां तेषामाश्रमपदत्वमुक्तम् । वामं सुन्दरं नयनम् ॥

लम्बकूर्चानां तापसानां कदम्बकैः ।

**राजा**— वयस्य, अन्यच्च शकुन्तलायाः प्रसाधनमभिमतमत्र विस्मृतमस्माभिः ।

**विदूषकः**— किं विअ ?

किमिव ?

**सानुमती**— वणवासस्स सोउमारस्स अ जं सरिसं भविस्सदि ।

वनवासस्य सौकुमार्यस्य च यत् सदृशं भविष्यति ।

**राजा**—

**कृतं न कर्णार्पितबन्धनं सखे**
**शिरीषमागण्डविलम्बिकेसरम् ।**
**न वा शरच्चन्द्रमरीचिकोमलं**
**मृणालसूत्रं रचितं स्तनान्तरे ॥ १८ ॥**

---

लम्बकूर्चानां दीर्घश्मश्रूणाम् । 'कूर्चोऽस्त्री श्मश्रुपीडयोः' इति केशवः । अन्यच्चेति । अभिमतम्, अनेनावश्यलिखितव्यत्वं व्यज्यते । विस्मृतं लिखितुम् इत्यर्थात् । तदपि लिखितव्यमिति भावः । किमिव, किं तदित्यर्थः । यत्सदृशं भविष्यति, तादृशं किमपीति शेषः ॥

**कृतमिति** । बन्धनं वृन्तम् । वाशब्दः समुच्चये ॥

**विदूषकः**— किं णु खु तत्तहोदी रत्तपळ्ळवसोहिणा अग्गहत्थेण मुहमावरिअ चकिदचाकिदा विअ ट्ठिआ। (सावधानं निरूप्य) एसो महुअरो दासीएवुत्तो कुसुमासवपाडच्चरो अत्तहोदीए वअणं अदिळंघेदि।

किं नु खलु तत्रभवती रक्तपल्लवशोभिना अग्रहस्तेन मुखमावृत्य चकितचाकितेव स्थिता। एष मधुकरो दास्याःपुत्रः कुसुमासवपाटच्चरोऽत्रभवत्या वदनमतिलङ्घयति।

**राजा**— ननु वार्यतामेष दुष्टः।

**विदूषकः**— भवं एव्व अविणीदाणुसासी इमस्स वारणे पहविस्सदि।

भवानेवाविनीतानुशासी अस्य वारणे प्रभविष्यति।

**राजा**— युज्यते। अयि भोः कुसुमलताप्रियातिथे, किमितः परिपतनखेदमनुभवसि?

**एषा कुसुमनिषण्णा**

**तृषितापि सती भवन्तमनुरक्ता।**

---

कुसुमलतेति। कुसुमलता समुपस्थितं त्वां सत्करिष्यति। अतस्तामेवाभिसरेत्यर्थः। परिपतनं संचरणम्। किं चेत्याह— **एषेति।**

प्रतिपालयति मधुकरी
न खलु मधु विना त्वया पिबति ॥ १९ ॥

**सानुमती**— अज्ज वि खु अभिआदं एसो वारिदो ।

अद्यापि खल्वभिजातमेष वारितः ।

**विदूषकः**— पडिसिद्धे वि वामा एसा जादी ।

प्रतिषिद्धेऽपि वामैषा जातिः ।

**राजा**— एवं न मे शासने तिष्ठसि । श्रूयतां तर्हि संप्रति ।

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं स्पृशसि चेद्भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥

---

कुसुमनिषण्णा पातुं व्यवसिता । तृषिता आग्रहवती । अनुरक्तेति प्रतिपालने हेतुः । तत् त्वरितमभिगम्यतामेषेति भावः । अद्यापि उन्मादावस्थायामपि, यदि वा प्रियापरिभवेऽपि । अभिजातम् अपरुषम् । त्वया वारितोऽप्येष न विरमतीत्याह— प्रतिषिद्धेऽपीति । वामत्वे प्रतिषिद्धेऽपि वामा विरुद्धमार्गवर्तिनी एषा मधुपजातिः त्वदाज्ञां न बहुमनुते इत्यर्थः ॥

तिष्ठसीत्यत्र काक्वा प्रश्नः । **अक्लिष्टेति** । अक्लिष्टमन्यूनगुणम् ।

**विदूषकः**— एव्वं तिक्खणदण्डस्स किं ण भाइस्सइ। (प्रहस्यात्मगतम्) एसो दाणिं उम्मत्तओ। अहं वि एदस्स संसग्गेण ईरिसवण्णो संवुत्तो। (प्रकाशम्) भो चित्तं खु एदम्।

एवं तीक्ष्णदण्डस्य किं न भेष्यति? एष इदानीमुन्मत्तकः। अहमप्येतस्य संसर्गेण ईदृशवर्णः संवृत्तः। भोः चित्रं खल्वेतत्।

**राजा**— कथमेतत्?

**सानुमती**— अहं वि दाव दाणिं अणवगदत्था। किं उण जहालिहिदाणुहावी एसो?

अहमपि तावदिदानीमनवगतार्था। किं पुनर्यथालिखितानुभाव्येषः?

---

बालः तरुः बालतरुः तस्य। तेन पल्लवस्य गुणोत्कर्ष उक्तः। स्पृशसि चेदिति। स्पर्शोऽपि न कर्तव्यः, का कथा रसास्वादे इत्यर्थः। कमलोदरमेव बन्धनं कारागृहं कमलोदरबन्धनम्। किं न भेष्यति। भेष्यत्येवेत्यर्थः। ईदृशवर्णः एवंविधः। कथमिति। कथमेतच्चित्रं स्यादित्यर्थः। तस्यानवगतार्थत्वं संगच्छत इत्याह— अहमपीति। यथालिखितानुभावी, पूर्वमनुभूतं हि लिखितम्।

**राजा**— किं त्वया पौरोभाग्यमाचरितम् ?

दर्शनसुखमनुभवतः
साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे
पुनरपि चित्रीकृता कान्ता ॥ २१ ॥

[इति बाष्पं विहरति ।

**सानुमती**-- पुव्वावरविरोही अपुव्वो एस विहाणमग्गो ।

पूर्वापरविरोध्यपूर्व एष विधानमार्गः ।

**राजा**— वयस्य, कथमविश्रामदुःखमनुभवामि ?

प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः ।

---

पौरोभाग्यम् । 'दोषैकदृक् पुरोभागी' इत्यमरः । किं तदित्याह— **दर्शनेति** । साक्षात् प्रत्यक्षम् । तन्मयेन कान्तैवेयमिति दृढबुद्ध्या । स्मृतिकारिणा आलेख्यकान्तेयमिति स्मृतिकारिणा । विहरति विसृजति । पूर्वापरविरोधी अनास्थया खलु पूर्वं परित्यागः आस्थया हीदानीं पश्चात्तापः इति पूर्वापरविरोधः । अपूर्वः पूर्वमविद्यमानः अदृष्टपूर्वः । विधानमार्गः वृत्तान्तप्रकारः । बाष्पप्रतिहतालेख्यविनोद आह— वयस्येति । विनोदराहित्यात् निरन्तरदुःखमनुभवितुमशक्तोऽस्मीत्यर्थः । कुत इत्याह— **प्रजागरादिति** । खिलीभूतः नष्टः ।

बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २२ ॥

**सानुमती**— सव्वहा पमज्जिदं तुए पच्चादेसदुक्खं सउन्दळाए ।

सर्वथा प्रमृष्टं त्वया प्रत्यादेशदुःखं शकुन्तलायाः ।

(प्रविश्य)

**चतुरिका**— जेदु भट्टा । वत्तिआकरण्डअं गेह्णिअ इदोमुही पत्थिदम्हि ।

जयतु भर्ता । वर्तिकाकरण्डकं गृहीत्वा इतोमुखी प्रस्थितास्मि ।

**राजा**— किम् ?

**चतुरिका**— अम्हहत्थादो अन्तरा पिङ्गळिआदुदीआए देवीए वसुमदीए अहं एव्व एदं अज्जउत्तस्स उवणइस्सं त्ति सबळक्कारं गहिदम् ।

अस्मद्धस्तादन्तरा पिङ्गलिकाद्वितीयया देव्या वसुमत्या अहमेवैतदार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतम् ।

---

ददाति, अवसरमित्यर्थात् । करण्डकं संग्राहपात्रम् ॥

**विदूषकः—** दिट्ठिआ तुं मुक्का ।

दिष्ट्या त्वं मुक्ता ।

**चतुरिका—** जाव विडवळग्गं उत्तरीअं देवीए पिङ्गळिआ मोएदि दाव णिव्वाहिदो मए अत्ता ।

यावद्विटपलग्नमुत्तरीयं देव्याः पिङ्गलिका मोचयति तावन्निर्वाहितो मयात्मा ।

**राजा—** वयस्य, उपस्थिता देवी । बहुमानगर्विता च । भवानिमां प्रतिकृतिं रक्षतु ।

**विदूषकः—** अत्ताणं ति भणाहि । (चित्रफलकमादायोत्थाय) जइ भवं अन्तेउरकळहादो मुंचीअदि तदो मं मेहप्पडिच्छन्दे पासादे सद्दावेहि ।

आत्मानमिति भण । यदि भवानन्तःपुरकलहान्मुच्येत ततो मां मेघप्रतिच्छन्दे प्रासादे शब्दापय ।

[इति द्रुतपदं निष्क्रान्तः ।

**सानुमती—** अण्णासंकन्तहिअओ वि पुढमासंभावणं अवेक्खदि ठिरसोहदो एसो ।

---

रक्ष आच्छादय । आत्मानमिति भण । मय्यपि कुपिता अहमपि गच्छामीति । मेघप्रतिच्छन्द इति प्रासादस्य गुणनाम ॥

अन्यासंक्रान्तहृदयोऽपि प्रथमासंभावनमपेक्षते स्थिर-सौहृद एषः ।

(प्रविश्य पत्रहस्ता)

**प्रतीहारी—** जेदु देवो ।

जयतु देवः ।

**राजा—** वेत्रवति, न खल्वन्तरा दृष्टा त्वया देवी ?

**प्रतीहारी—** अह इम् । पत्तहत्थं मं देक्खिअ पडिणिवुत्ता ।

अथ किम् । पत्रहस्तां मां दृष्ट्वा प्रतिनिवृत्ता ।

**राजा—** कार्यज्ञा कार्योपरोधं मे परिहरति ।

**प्रतीहारी—** देव, अमच्चो विण्णवेदि— अत्थजातस्स गणणाबहुळदाए एक्कं एव्व पोरकज्जं पच्चवेक्खिदं । तं देवो पत्तारूढं पच्चक्खीकरोदु त्ति ।

देव, अमात्यो विज्ञापयति— अर्थजातस्य गणनाबहुलतया एकमेव पौरकार्यं प्रत्यवेक्षितम् । तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति ।

**राजा—** इतः पत्रं दर्शय ।

[ प्रतीहारी उपनयति ।

न खल्वित्यत्र काक्वा प्रश्नः ॥

**राजा—** (अनुवाच्य) कथं समुद्रव्यवहारी सार्थवाहो धनमित्रो नौव्यसनेन विपन्नः । अनपत्यश्च किल सः । राजगामी तस्यार्थसंचय इत्यमात्येन लिखितम् । (सविषादम्) कष्टं खल्वनपत्यता । वेत्रवति, महाधनत्वात्तत्रभवता बहुपत्नीकेन भवितव्यम् । विचार्यतां काचिदापन्नसत्त्वापि तस्य भार्या स्यात् ।

**प्रतीहारी—** देव, दाणिं एव्व साकेदअस्स सेट्ठिणो दुहिद णिव्वुत्तपुंसवणा जाआ से सुणीअदि ।

देव, इदानीमेव साकेतकस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायास्य श्रूयते ।

**राजा—** ननु गर्भः पित्र्यं रिक्थमर्हति । गच्छ । एवममात्यं ब्रूहि ।

**प्रतीहारी—** जं देवो आणवेदि ।

यद्देव आज्ञापयति ।

[इति प्रस्थिता ।

**राजा—** एहि तावत् ।

**प्रतीहारी—** इअं म्हि ।

इयमस्मि ।

---

साकेतमयोध्या । साकेते वसतीति साकेतकः ॥

**राजा**— किमनेन संततिरस्ति नास्तीति ।

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥

**प्रतीहारी**— एव्वं णाम घोसइदव्वम् । (निष्क्रम्य पुनः प्रविशति) काळे पविट्ठं विअ अहिणन्दिअं देवस्स सासणं अमच्चेण जणेण अ ।

एवं नाम घोषयितव्यम् । काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनममात्येन जनेन च ।

**राजा**--(दीर्घं निःश्वस्य) एवं भोः संततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति । ममाप्यन्ते पुरुवंशश्रिय एष वृत्तान्तः ।

**प्रतीहारी**—पडिहदं अमङ्गळम् ।

प्रतिहतममङ्गलम् ।

**राजा**— धिङ्मामुपस्थितश्रेयोवमानिनम् ।

---

'सर्वत्राघोपहतात् पितेवानुगृह्णीयात्' इति वचनमनुसरन्नाह—येनेति । स स दुष्यन्त इति, तत्तत्कृत्यं दुष्यन्तः करोतीति । पापात् दुष्टात् । एवं नाम घोषयितव्यमिति, एवं घोषयिष्यामीति भावः । प्रवृष्टं प्रभूतं वर्षम् । एष वृत्तान्तः, स्यादिति शेषः ॥

**सानुमती**— असंसअं सहिं एव्व हिअए करिअ णिन्दि-
दो णेण अत्ता ।

असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा ।

**राजा**—

संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय
वसुंधरा काल इवोप्तबीजा ॥ २३ ॥

**सानुमती**— अपरिच्छिण्णा सन्ददी दे भविस्सदि ।

अपरिच्छिन्ना संततिस्ते भविष्यति ।

**चतुरिका**— (जनान्तिकम्) अए इमिणा सत्थवाहवुत्तन्तेण दिउणिआणुसओ भट्टा । णं अस्सासइदुं मेहप्पडिच्छ-न्दादो माढव्वं गह्णिअ आअच्छामि ।

अये अनेन सार्थवाहवृत्तान्तेन द्विगुणितानुशयो भर्ता । एनमाश्वासयितुं मेघप्रतिच्छन्दान्माढव्यं गृहीत्वा आगच्छामि ।

---

संरोपित इति । संरोपिते निषिक्ते, 'आत्मा प्रविश्य जायायां पुत्ररूपेण जायते' इति स्मृतेः । कल्पिष्यमाणा महते फलायेति साभा-

**प्रतीहारी**— सुट्ठु भणासि ।

सुष्ठु भणसि ।

[इति निष्क्रान्ता चतुरिका ।

**राजा**— अहो दुष्यन्तस्य संशयमारूढाः पिण्डभाजः ।

कुतः ?

अस्मात्परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि करिष्यतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति ॥ २४ ॥

[इति मोहमुपगतः ।

**प्रतीहारी**— (ससंभ्रममवलम्ब्य) अस्ससदु अस्ससदु भट्टा ।
आश्वसित्वाश्वसितु भर्ता ।

**सानुमती**— हद्धि हद्धि ! सदि दीवे खु ववहाणदोसेण एसो अन्धआरं अणुहोदि । अहं दाणिं एव्व णिव्वुदं

---

रणम् । पिण्डभाजः पितरः । संशयं पिण्डमस्ति वा न वेति । पितॄणामवस्थामुत्प्रेक्षते— **अस्मादिति** । अस्माद्दुष्यन्तात् । क इति क्षेपे— कोऽपि न करिष्यतीति । 'निवापः पितृतर्पणम्' इत्यमरः । इति मत्वा, धौतमश्रु येन करणभूतेन तद्धौताश्रु, अतः शेषं च धौताश्रुशेषम् ।

करोमि । अहवा सुदं मए सउन्दळं समासासअन्तीए महेन्दजणणीए सुहादो– जण्णभाउस्सुआ देवा एव्व तह अणुचिट्ठन्ति जह तुमं धम्मपदिणिं अइरेण भट्टा अहिणन्दिस्सदि त्ति । ता जुत्तं एदं काळं खन्तुं जाव इमिणा वत्तिआउत्तन्तेण पिअसहिं आसासेमि ।

हा धिक् हा धिक् ! सति दीपे खलु व्यवधानदोषेणैषोऽन्धकारमनुभवति । अहमिदानीमेव निर्वृतं करोमि । अथ वा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखात्– यज्ञभागोत्सुका देवा एव तथानुतिष्ठन्ति यथा त्वां धर्मपत्नीमचिरेण भर्ता अभिनन्दिष्यतीति । तद्युक्तमेतं कालं क्षन्तुम् यावदनेन वर्तिकावृत्तान्तेन प्रियसखीमाश्वासयामि ।

[इति निष्क्रान्ता ।

---

'शेषं त्रिष्वन्यत्रोपयुक्तात्' इत्यमरः। सति दीपे खलु व्यवधानदोषेणैषोऽन्धकारमनुभवति, सत्येव पुत्रे तदज्ञानादेष तद्राहित्यदुःखमनुभवतीत्यर्थः । निर्वृतं करोमि पुत्रसद्भावं निवेदयामि। अथ वेति । न निवेदयामीत्यर्थः । कुत इत्याह— श्रुतमिति । अथैवं राजर्षेरुदन्तं प्रत्यक्षीकृत्य तद्विनियोगाय त्वरमाणाह— यावदनेनेति । वर्तिका आलेख्यम् ॥

( नैपथ्ये )

अविहा अविहा । अविहाविहा ।

**राजा**— ( कर्णं दत्त्वा ) माढव्यस्येवार्तस्वरः । कः कोऽत्र भोः ?

( प्रविश्य )

**चतुरिका**— परित्ताअदु परित्ताअदु देवो संसअगअं वअस्सम् ।

परित्रायतां परित्रायतां देवः संशयगतं वयस्यम् ।

**राजा**— केनार्तकण्ठो माणवकः ?

**चतुरिका**— देव, अदिट्ठरूवेण केण वि सत्तेण अक्कमिअ गहिअ मेहप्पडिच्छन्दस्स पासादस्स अग्गभूमिं आरोविदो ।

देव, अदृष्टरूपेण केनापि सत्त्वेनाक्रम्य गृहीत्वा मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितः ।

**राजा**— ( उत्थाय ) मा तावत् । ममापि सत्त्वैरभिभूयन्ते

---

आर्तस्वरः रोदनम् । केन कस्माद्धेतोः । आर्तकण्ठः आर्तस्वरः । अदृष्टरूपेण च्छन्नेन । आक्रम्य बलात् । सत्त्वेन भूतपिशाचादिष्वन्यतमेन । मा तावत् विपरीतमेतदित्यर्थः । कथमित्याह— ममापि सत्त्वाभिभाविनो मम सत्त्वैरभिभव इति ॥

गृहाः । अथ वा,

अहन्यहन्यात्मन एव ताव-
ज्ज्ञातुं प्रमादस्खलितं न शक्यम् ।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतो वेदितुमस्ति शक्तिः ॥ २५ ॥

(नैपथ्ये)

भो वअस्स, अविहा अविहा ।

भो वयस्य, अविहाविहा ।

**राजा**— (गतिभेदेन परिक्रामन्) सखे, न भेतव्यं न भेतव्यम् ।

(नैपथ्ये पुनस्तदेव पठित्वा)

कहं ण भाइस्सं? एसो मं को वि पच्चादवणदसिरोहरं इक्खुं विअ तिक्खणभंगं करेइ ।

कथं न भेष्यामि? एष मां कोऽपि पश्चादवनतशिरो-

---

प्रजापचारनिमित्तोऽयमिति मत्वाह— **अथ वेति** । नैतदनुपपन्नमित्यर्थः । कुत इत्याह— **अहन्यहनीति** । स्वस्य प्रमादायातं शकुन्तलापरित्यागं हृदि निधाय आत्मनः प्रमादस्खलितमिति । अस्ति शक्तिरिति । काक्वा प्रजापचारं वेदितुं कथं शक्तिः स्यादित्यर्थः ॥

धरं इक्षुमिव तीक्ष्णभङ्गं करोति ।

**राजा—** (सदृष्टिक्षेपम्) धनुस्तावत् ।

(प्रविश्य शार्ङ्गहस्ता)

**यवनिका—** भट्टा, इदं ससरं सरासणं हत्थावावसहिदं ।
भर्तः, इदं सशरं शरासनं हस्तावापसहितम् ।

[राजा सशरं धनुरादत्ते ।

(नैपथ्ये)

**एष त्वामभिनवकण्ठशोणितार्थी**
**शार्दूलः पशुमिव हन्मि वेष्टमानम् ।**
**आर्तानां भयमपनेतुमात्तधन्वा**
**दुष्यन्तस्तव शरणं भवत्विदानीम् ॥ २६ ॥**

**राजा—** (सरोषम्) कथं मामेवोद्दिशति ? तिष्ठ तिष्ठ कुणपाशन । न त्वमिदानीं भविष्यसि । (शार्ङ्गमारोप्य) वेत्रवति, सोपानमार्गमादेशय ।

---

भङ्गः परिभवः; इक्षुपक्षे भञ्जनम्। धनुस्तावत्, आनयेति शेषः । शार्ङ्गं चापम् ॥

एष इति । वेष्टमानं लुठन्तम् । कोपं जनयितुमाह— आर्तानामिति । न त्वमिदानीं भविष्यसि, त्वां हन्मीत्यर्थः ॥

**प्रतीहारी**— इदो इदो देवो ।

इत इतो देवः ।

[सर्वे सत्वरमुपसर्पन्ति ।

**राजा**— (समन्तादवलोक्य) शून्यं खल्विदम् ।

(नैपथ्ये)

अविहाविहा । अहं अत्तभवं पेक्खामि । तुं मं ण पेक्खसि । विळाळगहिदो मूसिओ विअ णिरासम्हि जीविदे संवुत्तो ।

अविहाविहा । अहमत्रभवन्तं पश्यामि । त्वं मां न पश्यसि । बिडालगृहीतो मूषिक इव निराशोऽस्मि जीविते संवृत्तः ।

**राजा**— भोस्तिरस्करिणीगर्वित, मदीयमस्त्रं त्वां द्रक्ष्यति । एष तमिषुं संदधे ।

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षति च द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ २७ ॥

[इति अस्त्रं च संधत्ते ।

---

मदीयमस्त्रं त्वां द्रक्ष्यति, तिरस्करणीगर्वमपहरामीति भावः । वध्यरक्ष्यविवेचने दृष्टान्तमाह— हंस इति ॥

(ततः प्रविशति विदूषकमुत्सृज्य मातलिः विदूषकश्च ।)

**मातलिः—**

कृताः शरव्यं हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ॥ २८ ॥

**राजा—** (अस्त्रमुपसंहरन् ) अये मातलिः ! स्वागतं देवेन्द्रसारथये ।

**विदूषकः—** अहं जेण इट्ठिपसुमारं मारिदो, सो इमिणा साअदेण अहिणन्दीअदि ।

अहं येनेष्टिपशुमारं मारितः, सोऽनेन स्वागतेनाभिनन्द्यते ।

**मातलिः—** (सस्मितम् ) आयुष्मन्, यदस्मि हरिणा भवत्सकाशं प्रेषितः ।

---

निजागमनकार्यं सामान्येन कथयंस्तस्य कोपं शमयति—**कृता इति** । शरव्यं लक्ष्यम् । तेषु लक्ष्यभूतेषु, न मयीत्यर्थः । येनेष्टिपशुमारं येनेष्टिपशुं यथा मारयति तथा मारितः । यदस्मीति, यस्मादहमित्यर्थः । भवत्सकाशं प्रेषितः, तच्छ्रूयतामिति शेषः । अत आह—

**राजा**— अवहितोऽस्मि ।

**मातलिः**— अस्ति कालनेमिप्रभृतिर्दुर्जयो दानवगणः ।

**राजा**— श्रुतपूर्वं मया नारदात् ।

**मातलिः**—

सख्युस्ते स किल शतक्रतोरजय्य-
स्तस्य त्वं रणशिरसि स्मृतोऽसि हन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥ २९ ॥

स भवानात्तशस्त्र एव इदानीमैन्द्रं रथमारुह्य विजयाय प्रतिष्ठताम् ।

**राजा**— अनुगृहीतोऽस्म्यनया मघवतः संभावनया । अथ माढव्यं प्रति भवता किमेवं कृतम् ?

**मातलिः**— किंनिमित्तादपि मनःसंतापादायुष्मान्मया विक्लवो दृष्टः । पश्चात् कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः ?

---

अवहितोऽस्मीति । **सख्युरिति** । अत्र दृष्टान्तोऽलंकारः । तेन शतक्रतोर्विशिष्टदानवनिधनाशक्तावपि न निकर्ष इति व्यज्यते । किंनिमित्तादपि कस्मादपि निमित्तात् ॥

ज्वलति चलितेन्धनोऽग्नि-
विप्रकृतः पन्नगः फणं कुरुते ।
प्रायः स्वं महिमानं
कोपात्प्रतिपद्यते हि जनः ॥ ३० ॥

**राजा**— युक्तमनुष्ठितं भवद्भिः । (जनान्तिकम्) वयस्य, न पुनरतिक्रमणीया दिवस्पतेराज्ञा । तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यमार्यपिशुनं ब्रूहि—

त्वन्मतिः केवला ताव-
त्परिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मि-
न्कर्मणि व्यापृतं धनुः ॥ ३१ ॥

इति ।

---

कोपाधाने हेतुमाह— ज्वलतीति । कोपात् भवानात्मनो महिमानं प्रतिपद्येतेति मया भवान् कोपित इति भावः ॥

इत्यभिरामविरचिते अभिज्ञानशाकुन्तलदिङ्मात्रदर्शने

षष्ठोऽङ्कः ॥

**विदूषकः**— जं भवं आणवेदि ।

यद्भावनाज्ञापयति ।

[इति निष्क्रान्तः ।

**मातलिः**— इत इत आयुष्मान् ।

**राजा**— तथा । [इति रथारोहणं नाटयति ।

[इति निष्क्रान्ताः सर्वे ।

## इति षष्ठोऽङ्कः ॥



# सप्तमोऽङ्कः ॥

—*—

(ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च ।)

**राजा—** मातले, अनुष्ठितनियोगोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये ।

**मातलिः—** (सस्मितम्) उभयमप्यपरितोषम् ।

**प्रथमोपकृतं मरुत्वतः**
**प्रतिपत्त्या लघु मन्यते भवान् ।**
**गणयत्यपदानविस्मितो**
**भवतः सोऽपि न सत्क्रियागुणान् ॥ १ ॥**

---

एवं प्रदर्श्य नृपतेः स्वर्यात्रां देवराजशासनतः । पूर्वाङ्कोपक्षिप्तं प्रेयस्याः संगमं प्रदर्शयति ॥ संहृतदेवारातिर्हरिणा हृष्टेन सादरं मुक्तः । राजा रथेन गच्छन्भूलोकं मातलिं प्राह— **मातले इति** । अनुष्ठितेति । आत्मना उपयोगे जातेऽपीत्यर्थः । अपरितोषं अनलंभावम् । तत्प्रकारमाह— **प्रथमेति** । प्रथमं सत्कारात्पूर्वमुपकारं दानवनिधनलक्षणम् । प्रतिपत्त्या बहुमानेन तत्कार्येण सत्कारेण । सत्क्रियागुणान् । गुण आवृत्तिः । पौनःपुन्येन कृतान् सत्कारानित्यर्थः । 'गुण-

**राजा**— मा मैवम्। मनोरथानामप्यभूमिर्विसर्जनावसरसत्कारः। मम हि दिवौकसां समक्षमर्धासनोपनिवेशितस्य,

अन्तर्गतप्रार्थितमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन।
आमृष्टवक्षोहरिचन्दनाङ्का
मन्दारमाला हरिणा पिनद्धा ॥ २ ॥

**मातलिः**— किमिव नामायुष्मानमरेश्वरान्नार्हति। पश्य,

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम्।

---

स्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती। मा मैवम्, एवं तस्यापरितोषस्य नावकाश इति भावः। कुत इत्याह— ममहीति। दिवौकसां समक्षम्। आस्थानमण्डपे। अर्धासने सिंहासनस्य समेंशे। उप समीपे, स्वाङ्गसंसर्गम्; निवेशितस्य स्वयं गृहीत्वा स्थापितस्य ॥

**अन्तरिति**। प्रार्थितं प्रार्थनम् अङ्कुरिताभिलाषमित्यर्थः। कृतस्मितेन इदानीं त्वत्तोऽयमस्या अधिकारीति भावः। आमृष्टं संश्लिष्टम्। आमृष्टेत्यनेन सौभाग्यातिशय उक्तः। पिनद्धा वक्षस आकृष्य मम शिरसि स्वयं निबद्धा। अमरेश्वरात्, आदातुमिति शेषः॥

कुत इत्याह— **सुखेति**। कण्टका दुष्टाः। किं तदुभयमित्याह—

तव शरैरधुना नतपर्वभिः
पुरुषकेसरिणश्च पुरा नखैः ॥ ३ ॥

**राजा—** मा मैवम् । अत्र खलु शतक्रतोरेव महिमा स्तुत्यः । कुतः ?

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किं वाभविष्यदरुणस्तमसां निहन्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४ ॥

**मातलिः—** सदृशमेतदायुष्मतः । (स्तोकमन्तरं परिक्रम्य)

---

तवेति । नतं पर्व संधिबन्धो येषाम् । साधारणमेतन्नखानाम् । अत्र नरसिंहस्य राज्ञश्च नखानां शराणां चोपमानोपमेयभावो व्यज्यते । तेन राज्ञः पराक्रमस्य लोकोत्तरत्वं च । मा मैवम्, वादीरिति शेषः । कुत इत्याह— अत्रेति । शतक्रतोरेव, न मम ॥

**सिध्यन्तीति** । नियोज्या भृत्याः । संभावना बहुमानः नियोज्यविषयः । गुण उत्कर्षः । ईश्वराणां स्वामिनाम् । अत्र हेतुमति हेतुरारोप्यते— सिध्यन्तीति यत् तस्य हेतुरीश्वराणां संभावनागुण इति । यदुक्तं भारविणा— 'संभावना ह्यधिकृतस्य तनोति तेजः' इति । उक्तं सामान्यं विशेषेणोपपादयति— किं वेति ॥

**सदृशमिति** । एतत् आत्मनोऽपदानस्य शतक्रतावारोपणम् ।

आयुष्मन्, इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः ।

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतांशुकेषु ।
संचिन्त्य गीतिक्षममर्थबन्धं
दिवौकसस्त्वच्चरितं लिखन्ति ॥ ५ ॥

**राजा**— मातले, असुरसंप्रहारोत्सुकेन पूर्वेद्युरधिरोहता न लक्षितो मया स्वर्गमार्गः । कतमस्मिन्मरुतां पथि वर्तामहे ?

**मातलिः**—

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मिः ।

---

आयुष्मतः धीरोदात्तस्य । अन्तरमवकाशम् । सौभाग्यमुपपादयति—विच्छित्तीति । विच्छित्तिरलंकारः तिलकादिः । वर्णैः हरिचन्दनादिभिः । अंशुकेष्विति पल्लवानामंशुकत्वात् । संचिन्त्य सम्यग्विचिन्त्य, विरचय्येत्यर्थः । अर्थबन्धं संदर्भम् । त्वच्चरितं प्रबन्धरूपेण विरचय्य लिखन्ति । स्वर्गमार्गः स्वर्गारोहणपदवी । कतमस्मिन्मरुतां पथि; सप्त वायुस्कन्धाः, 'आवहः प्रवहश्चैव ततश्चानुवहस्तथा । संवहो विवहश्चैव ततश्चोर्ध्वं परावहः ॥ द्विजाः परिवहश्चैव वायोर्वै सप्त नेमयः' इति भारतोक्तेः । गगनप्रतिष्ठां त्रिस्रोत-

तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ६ ॥

**राजा**— अतः खलु सबाह्यकरणोऽन्तरात्मा मम प्रसीदति। (रथाङ्गं विलोक्य) मेघपदवीमवतीर्णौ स्वः।

**मातलिः**— कथमवगम्यते ?

**राजा**—

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
र्हरिभिरचिरभासां तेजसा चानुलिप्तैः।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ ७ ॥

**मातलिः**— क्षणादायुष्मानधिकारभूमौ वर्तिष्यते।

---

सम् आकाशगङ्गाम्। द्वितीयेति। भूगतविक्रमापेक्षया। अतः खलु उक्तगुणविशिष्टवायुमार्गवर्तनात्। सबाह्यकरणः सेन्द्रियवर्गः। रथाङ्गं चक्रम्। अवगमनहेतुमाह— अयमिति। अरविवरेभ्यः अराणां परस्परमश्लिष्टानाम् अन्तरान्तरा विवराणि सन्ति। यथा अस्यैव 'चक्रभ्रान्तिररान्तरेषु जनयत्यन्यामिवारावलिम्' इति। मेघमार्गे चातकसंचारः कविप्रसिद्धः। हरिभिः अश्वैः। गतं गमनम्। उपरि पृष्ठे। पिशुनयति सूचयति। आसन्नो भूलोक इत्याह— क्षणादिति॥

**राजा**— (अधो विलोक्य) मातले, वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः ।

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
वर्णस्वास्तरलीनतां विजहाति स्कन्धोदयात्पादपाः ।
संतानं तनुभावनष्टसलिला व्यक्तं व्रजन्त्यापगाः
केनाप्युत्क्षिपतेव मर्त्यभुवनं मत्पार्श्वमानीयते ॥ ८ ॥

**मातलिः**— साधु दृष्टम् । (सबहुमानं विलोक्य) अहो उदग्ररमणीया पृथिवी !

---

शैलानामिति । अत्र शैलकर्तृकमुन्मज्जनमपि संभाव्यमानमेव । मेदिनी शैलानां शिखरादवरोहतीव शैला मेदिन्या उन्मजन्तीवेत्यर्थः । यदुक्तम्— 'एकत्रोत्प्रेक्षितत्वेन यत्रार्था बहवः स्मृताः । तत्रेवादिः प्रयोक्तव्यः प्रधानादेव नान्यतः' इति । वर्णस्वास्तरलीनताम्, वर्णः श्यामादिः । वर्ण एव स्वास्तरः प्रच्छदपटो वर्णस्वास्तरः ; अत्र लीनता पृथगनुपलब्धिः । स्कन्धानामुदयादाविर्भावात् । यदुक्तमनर्घराघवे– 'स्वस्ववर्णविनिविष्टपदार्थाः' इति । पर्णस्वास्तरलीनतामिति वा पाठः । संतानम् अविच्छिन्नप्रवाहताम् । तनुभावेन पूर्वं नष्टसलिलत्वेन प्रतीयमानाः । केनापि, कश्चिन्ममोत्कण्ठामपनेतुं मर्त्यभुवनमुत्क्षिप्य मत्समीपं नयतीवेत्यर्थः ।

**राजा**— मातले, कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरस-निष्यन्दी सांध्य इव मेघपरिघः सानुमानालक्ष्यते ?

**मातलिः**— आयुष्मन्, एष खलु हेमकूटो नाम किंपुरुष-पर्वतः परं तपस्विनां सिद्धिक्षेत्रम् ।

**स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।**
**सुरासुरगुरुः सोऽस्मिन्सपत्नीकस्तपस्यति ॥ ९ ॥**

**राजा**— तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ।

**मातलिः**— प्रथमः कल्पः ।

[इति नाट्येनावतीर्णौ ।

---

कनकरसनिष्यन्दी कनकमयधातुरसनिष्यन्दी । परिघाकारो मेघः मेघपरिघः । किंपुरुषपर्वतः किंपुरुषवर्षस्य मर्यादापर्वतः । यदुक्तं भागवते— 'दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति त्रयो हरिवर्षकिंपुरुषभारतानां त्रयाणां मर्यादागिरयः' इति । अभिलषितसिद्धेः क्षेत्रम् उत्पत्तिस्थानम् । महत्त्वान्तरमाह— **स्वायंभुवादिति** । प्रजापतिः मारीचनामा । **तेन हीति** । अनतिक्रमणीयानि आदरणीयानि । श्रेयांसि श्रेयस्कराणि । प्रदक्षिणीकृत्येति । यदुक्तम्— 'मृदङ्गं दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत प्रख्यातं च वनस्पतिम्' इति । एवं कर्तव्यमित्याह— **प्रथमः कल्प इति** । मुख्यः पक्ष एष इत्यर्थः ॥

**राजा**— (सविस्मयम्)

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुन्धत-
स्तवावतीर्णोऽपि न लक्ष्यते रथः ॥ १० ॥

**मातलिः**— एतावानेव शतक्रतोरायुष्मतश्च विशेषः ।

**राजा**— कतमस्मिन् प्रदेशे मारीचाश्रमः ?

**मातलिः**— (हस्तेन प्रदर्शयन्)

वल्मीकार्धनिमग्नमूर्तिरुरसा संदष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापिशकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥

---

**उपोढेति** । निरुन्धत इति हेतुभावगर्भम् ; अभूतलस्पर्शतया स्तम्भितत्वादित्यर्थः । एतावान् भूतलस्पर्शाभावः । **वल्मीकेति** । परित उद्गतेन वल्मीकेन तिरोहितनाभ्यधःकाय इत्यर्थः । उरसा, उपलक्षणे तृतीया । संदष्टा संलग्ना । लताप्रतानवलयेन प्रतिक्षणं वर्धिष्णुना । नीडं कुलायः । निचितं व्याप्तम् । अभ्यर्कबिम्बमिति तदानींतनावस्था । अ-

**राजा**— नमोऽस्मै कष्टतपसे ।

**मातलिः**— (संयतप्रग्रहं कृत्वा) एतावति परिवर्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः ।

**राजा**— स्वर्गादधिकतरनिर्वृति स्थानम् । अमृतह्रदमिवावगाढोऽस्मि ।

**मातलिः**— (रथं स्थापयित्वा) अवतीर्यताम् ।

**राजा**— (अवतीर्य) भवान् कथमिदानीम् ?

**मातलिः**— संयन्त्रितो मया रथः । अहमप्यवतरामि । (तथा कृत्वा) इत इत आयुष्मान् ।

[इति उभौ परिक्रामतः ।

**मातलिः**— दृश्यन्तामत्रभवतां तपोधनानां तपोवनभूमयः ।

**राजा**— ननु विस्मयादवलोकयामि ।

---

सात्त्विकाभिनये । कष्टं कृच्छ्रम् तपो यस्य । इत आरभ्य आश्रम इत्याह— एतावतीति । प्रदेशे । तस्य लक्षणमाह—परिवर्धितेति । अथ स्वतः सात्त्विकः सत्त्वोद्दीपनस्थलसंसर्गेण प्रवृद्धसत्त्वगुणतया प्रहृष्यदन्तःकरण आह— स्वर्गादिति । अधिकतरा निर्वृतिर्यस्मिन् तदधिकतरनिर्वृति । **कथमिति** । अवतरति वा न वेत्यर्थः । विस्मयावहत्वमुप-

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंनिधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥

**मातलिः**— उत्सर्पिणी खलु महतां प्रार्थना । (परिक्रम्याकाशे) अये वृद्धशाकल्य, किमनुतिष्ठति भगवान्मारीचः ? किं ब्रवीषि ? दाक्षायण्या पतिव्रतापुण्यमधिकृत्य पृष्टस्तदस्यै महर्षिपत्नीसहितायै निवेदयतीति । तर्हि प्रतिपाल्यावसरः प्रस्तावः । (राजानमवलोक्य) अस्मिन्नशोकवृक्षे तावदास्तामायुष्मान् । यावत्त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि ।

---

पादयति— **प्राणानामिति** । उचिता उचितकालभवा । सत्कल्पवृक्ष इत्यनेन स्वादुभोजनसुलभता व्यज्यते । पुण्याभिषेकक्रिया त्रिषवणस्नानम् । काञ्चनेत्यनेन जलक्रीडायोग्यत्वं व्यज्यते । रत्नशिलातलेषु, उपविश्येत्यर्थात् । रत्नशिलेत्यनेन सरसगोष्ठीयोग्यत्वं व्यज्यते । विबुधस्त्रीसंनिधावित्यनेन संभोगयोग्यता च । यत् अन्यमुनयः तपोभिः काङ्क्षन्ति, यत्काङ्क्षयान्ये तपांसि चरन्तीत्यर्थः । अत्राश्रमस्य स्वर्गसाम्यं व्यज्यते; भोगयोग्ये स्थाने योगमभ्यस्यन्तीति मुनीनां धैर्यातिशयश्च । उत्सर्पिणी ऊर्ध्वं सर्पणशीला । प्रतिपाल्यः प्रतीक्ष्यः

**राजा**— यथा भवान् मन्यते ।

[इति तथा स्थितः ।

**मातलिः**— आयुष्मन्, साधयाम्यहम् ।

[इति निष्क्रान्तः ।

**राजा**— ( निमित्तं सूचयित्वा )

**मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा ।**
**पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥ १३ ॥**

( नैपथ्ये )

मा खु चावळं करेहि । कहं ग ओ एव्व अत्तणो पकिदिम् ।

---

अवसरो यस्य । प्रस्तावः मारीचदर्शनारम्भः । अशोकवृक्षे तद्वेद्याम् । इन्द्रगुरवे इन्द्रस्य पित्रे मारीचाय । अन्तरमवकाशः । निमित्तं दक्षिणबाहुस्पन्दनलक्षणम्, तस्य दयितावाप्तिसूचकत्वात् । तेनोद्बोधितदयितापरित्यागखेदस्तामनुसंधाय सानुशयमाह— **मनोरथायेति** । विषये विषय्युपचारः । मनोरथविषयाय । प्रेयसीमवाप्तुं न ममाशा; प्रेयसी न संनिवर्तेत; तस्मात् बाहो तव स्पन्दनं वृथैवेत्यर्थः । उक्तमर्थं सामान्येनोपपादयति—पूर्वावधीरितमिति । दुःखं कृच्छ्रात्, परिवर्तते, न परिवर्तेत इति भावः । अथ, बालं शकुन्तलायाः कर्षन्तं कमपि केसरिकिशोरम् । उपमातृस्थानीये तापसपत्न्यौ निवारय-

मा खलु चापलं कुरु । कथं गत एवात्मनः प्रकृतिम् ।

**राजा**— (कर्णं दत्वा) अभूमिरियमविनयस्य । को नु खल्वेष निषिध्यते । (शब्दानुसारेणावलोक्य) अये, को नु खल्वयमनुबध्यमानस्तापसीभ्यामबालसत्त्वो बालः ।

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ १४ ॥

(ततः प्रविशति यथानिर्दिष्टकर्मा बालस्तापसीभ्याम् ।)

**बालः**— जिंभ जिंभ । दंदाणि ते गणइस्सं ।

जृम्भस्व, जृम्भस्व । दंतांस्ते गणयिष्यामि ।

**प्रथमा**— अविणीद किं णो अवच्चणिव्विसेसाणि सत्ताणि विप्पअरेसि । हंत वड्ढदे संरंभो । ठाणे खु इसिजणेण सव्वदमण त्ति किदणामहेओ सि ।

---

तः— मा खलु चापलं कुरु । चपलस्य कर्म चापलम् अकृत्यम् । प्रकृतिं स्वभावं चापलम् । अभूमिः अस्थानम् । अनुबध्यमानः कृच्छ्रेणानुगम्यमानः । अबालमस्तोकं प्रभूतं सत्त्वं पराक्रमो यस्य सः अबालसत्त्वः । 'सत्त्वोऽस्त्री जन्तुषु क्ली तु व्यवसाये पराक्रमे' इति केशवः । **अर्धेति** । अर्धपीतमातृस्तनमित्यर्थः । आमर्दन कर्षणार्थेन स्कन्धग्रहणेन क्लिष्टम् अयथातथं केसरं सटा यस्य । ताप-

अविनीत, किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि । हन्त! वर्धते संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।

**राजा**— किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः । नूनमनपत्यता मां वत्सलयति ।

**द्वितीया**— सव्वदमण, एसा केसरिणी तुमं ळंघेदि, जइ से उत्तअं ण मुञ्चेसि ।

सर्वदमन, एषा केसरिणी त्वां लङ्घयति, यद्यस्याः पुत्रकं न मुञ्चसि ।

**बालः**— (सस्मितम्) बळिअं भीदह्मि ।

बलवद्भीतोऽस्मि ।

[इति अधरं दर्शयति ।

**राजा**—

**महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।**

---

सौभ्याम्, सहेति शेषः । विप्रकरोषि बाधसे । नामधेयस्य योग्यत्वमन्वर्थत्वात् । 'आत्मा प्रविश्य जायायां पुत्ररूपेण जायते' इति पुत्रस्य तादात्म्यात्तद्दर्शनेन वत्सलहृदयस्तत्त्वमजानंस्तद्धेतुं विमृशति— किं नु खल्विति । हेतुमुत्प्रेक्षते— नूनमिति । भीतोऽस्मि । विपरीतलक्षणैषा । अहं सिंहीतो मनागपि न बिभेमीत्यर्थः । अतो नैनं मुञ्चामीति भावः । **महत इति**। यथा बीजं प्रतनु क्रमेण

स्फुलिङ्गावस्थया वह्निरेधापेक्ष इव स्थितः ॥ १५ ॥

**प्रथमा**— वच्छ, एदं बाळं मिएन्दअं मुंच । अवरं दे कीळणीअं दाइस्सम् ।

वत्स, एतं बालं मृगेन्द्रं मुञ्च । अपरं ते क्रीडनीयं दास्यामि ।

**बालः**— कहिं ? देहि णं ।

कुत्र ? देह्येतत् ।

[इति हस्तं प्रसारयति ।

**राजा**— (दृष्ट्वा सविस्मयम्) कथं चक्रवर्तिलक्षणमप्यनेन धार्यते । तथा ह्यस्य,

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥ १६ ॥

---

महांस्तरुर्भवति, तथायं बालो महातेजा भविष्यतीत्यर्थः । एधे इन्धने अपेक्षा यस्य स एधापेक्षः । स्फुलिङ्गावस्थया स्थितः, एधापेक्षः वह्निस्फुलिङ्ग इवेत्यर्थः । क्रीडनीयं क्रीडासाधनम् । चक्रवर्तिलक्षणमपि, न केवलं महापुरुषलक्षणम ॥

प्रलोभ्येति । प्रलोभ्यस्य वस्तुनः प्रणये याच्ञायां प्रसारितः ।

**द्वितीया**— सुव्वदे, ण सक्को एसो वाआमत्तेण विसुमरयिदुम्। गच्छ। ममकेरके उडजे मंकणअस्स इसिकुमारस्स वण्णचित्तिदो मित्तिआमोरओ चिट्ठइ। तं से उवहर।

सुव्रते, न शक्य एष वाङ्मात्रेण विस्मारयितुम्। गच्छ। ममकेरके उटजे मङ्कणकस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति। तमस्मै उपहर।

**प्रथमा**— तह। तथा। [इति निष्क्रान्ता।

**बालः**— इमिणा एव्व दाव कीळिस्सं।

अनेनैव तावत् क्रीडिष्यामि।

[इति तापसीं विलोक्य हसति।

**राजा**— स्पृहयामि खलु दुर्ललितायास्मै।

**आलक्ष्यदन्तमुकुलाननिमित्तहासै-**
**रव्यक्तवर्णरमणीयवचःप्रवृत्तीन्।**

---

जालग्रथिताः परस्परं निरन्तरसंश्लिष्टाः अङ्गुल्यो यस्य। अलक्ष्यं पत्राणां दलानामन्तरमितरेतरान्तरालं यस्य। इद्धो रागो लौहित्यं यस्याः। नवोषसा उषःप्रारम्भेण। भिन्नं विकासितम्। प्रसारितेऽपि जालग्रथिताङ्गुलित्वं लक्षणम्। दुर्ललिताय दुर्निवारशीलाय॥

विशिष्टबालस्वभावेनोद्बोधितानपत्यताखेद आत्मानं प्रत्यनुशोच-

अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १७ ॥

**तापसी**— एदु एदु । ण मं अअं गणेइ । (पार्श्वमवलोकयन्ती) को एत्थ इसिकुमारआणम् । (राजानं दृष्ट्वा) भद्दमुह, एहि; मोअअ दाव इमिणा दुम्मोअहत्थग्गहेण डिम्भळीळाए बाहिअमाणं बाळमिएन्दअम् ।

एत्वेतु । न मामयं गणयति । कोऽत्र ऋषिकुमाराणाम् । भद्रमुख, एहि; मोचय तावदमुना दुर्मोच-

---

ति— आलक्ष्येति । आलक्ष्या ईषल्लक्ष्या दन्ताङ्कुरा येषाम् । अनिमित्तो निरभिसंधिर्हासः अनिमित्तहासः । अव्यक्तवर्णा अस्पष्टाक्षरा अत एव रमणीया श्राव्या वचःप्रवृत्तिः वाक्प्रसरो येषाम् । अङ्के उत्सङ्गे आश्रयः स्थितिः अङ्काश्रये प्रणयो वाञ्छा अस्त्येषामित्यङ्काश्रयप्रणयिनः, तान् । अत्र धन्या एवंभूतांस्तनयान् वहन्तस्तदङ्गरजसा मलिनीभवन्तीत्यप्रस्तुतादर्थाद्वैधर्म्येण प्रस्तुतोऽर्थः प्रतीयते । अतः अहमधन्यः एवंविधं तनयमवहंस्तदङ्गरजसा न मलिनीभवामीत्यर्थः । अप्रस्तुतप्रशंसालंकारः, स्वभावोक्तिश्च इति तयोः संसृष्टिः ॥

सिंहशिशुक्रीडामसहमाना स्वयं वारयितुमशक्ता मुनिकुमारेष्वन्यतममाह्वयति— एत्विति । न मामयं गणयति, मामनादृत्य सिंहशिशुं पीडयति ॥

हस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् ।

**राजा—** तथा । (उपगम्य) अयि भो महर्षिपुत्र,

एवमाश्रमविरुद्धवृत्तिना
संयमः किमिति जन्मनस्त्वया ।
सत्त्वसंश्रयसुखोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनः ॥ १८ ॥

**सत्यव्रता—** भद्दमुह, ण खु एसो इसिकुमारओ ।

भद्रमुख, न खल्वेष ऋषिकुमारकः ।

**राजा—** आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवंतर्किणः । (यथाभ्यर्थितमनुतिष्ठन् बालस्पर्शमुप-

---

**एवमिति ।** आश्रमविरुद्धवृत्तिना सिंहशिशुं क्रीडयता। किमिति कस्माद्धेतोः । जन्मनः संयमः ब्राह्मणजातिविहितो हिंसादिभ्य उपरमः । यदुक्तं महाभारते— 'अहिंसा परमो धर्मः सर्वप्राणिहितं परम् । तस्मात्प्राणभृतः सर्वान्न हिंसेद्ब्राह्मणः क्वचित् ॥ ब्राह्मणः सौम्य एवेह जायेतेति परा श्रुतिः' इति । सत्त्वसंश्रयसुखः सत्त्वस्य सत्त्वगुणस्य संश्रयेण सुखः सुखकरः । चन्दनद्रुमोऽपि सत्त्वानां प्राणिनां संश्रये च्छायादिना सुखकरः । न दूषणीय एषः । बालं मृगेन्द्रं मुञ्चेति भावः । कथयति आकारव्यापाराभ्यामवगम्यत एव, न मुनिकुमारक इतीत्यर्थः । स्थानप्रत्ययात् स्थानं ह्याश्रमः ।

लभ्य आत्मगतम् )

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्या-
द्यस्यायमङ्गात्कृतिनः प्ररूढः ॥ १९ ॥

**सत्यव्रता—** (उभौ निर्वर्ण्य) अच्छरिअं अच्छरिअं !

आश्चर्यमाश्चर्यम् !

**राजा—** किमिव ?

**सत्यव्रता—** इमस्स तव संबन्धसंवादिणी आकिदित्ति विम्हाविदम्हि । अपरिइदस्स वि दे अप्पदिळोमो संवुत्तोत्ति ।

अस्य तव संबन्धसंवादिन्याकृतिरिति विस्मापितास्मि । अपरिचितस्यापि ते अप्रतिलोमः संवृत्त इति ।

---

यथाभ्यर्थितमिति, बालमृगेन्द्रं मोचयन्नित्यर्थः । 'न वाससां न रामाणां नापां स्पर्शस्तथाविधः' इति भारतोक्तेः बालस्पर्शात् हृष्यत्त्वगिन्द्रियो विमृशति— **अनेनेति** । कस्यापि कुलाङ्कुरेणेत्यनेन संबन्धित्वाभाव उक्तः । गात्रेष्विति बहुवचनेन सुखस्य सर्वाङ्गीणतोक्ता । कां निर्वृतिं प्रभूतां निर्वृतिमित्यर्थः । कृतिनः सुकृतिनः । अर्थापत्तिरत्रालंकारः । आश्चर्यं कुत इत्याह— अस्येति । व्यपदेशः

**राजा**— (बालमुपलालयन्) आर्ये, न चेन्मुनिकुमारोऽयमथ कोऽस्य व्यपदेशः ?

**सत्यव्रता**— पूरुवंसो ।

पूरुवंशः ।

**राजा**— (स्वगतम्) कथमेकान्वयो मम ? अतः खलु मदनुकारिणमत्रभवती मन्यते । अस्त्येतत् पौरवाणामन्त्यं कुलव्रतम् ।

भवनेषु सुधासितेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकपतिव्रतानि पश्चा-
त्तरुमूलानि गृहीभवन्ति तेषाम् ॥ २० ॥

---

वंशः । पूरुवंश इति । पुरुवंश्यस्य बालस्याश्रमे संभावनां वितर्कयति— अस्त्येतदिति । अन्त्यमिति, क्षत्रियाणां वानप्रस्थाश्रमोऽन्त्यः । 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानामयं धर्मो न विद्यते' इति स्मृतेः । सुधा भित्तिलेपनसाधनविशेषः । अत्र पूर्वार्धेन गृहस्थाश्रम उक्तः, अन्येन वानप्रस्थाश्रमः । तत्र 'वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा' इति पक्षद्वये द्वितीयं पक्षमाह— नियतैकेत्यादिना । नियता भर्तृशुश्रूषणे एका पतिव्रता येषु । एकेति व्यतिरिक्तपरिजनव्यपोहतत्परः । पूर्वं वार्द्धकादर्वाचीने

(प्रकाशम्) न खल्वात्मगत्या मानुषाणामेष विषयः ।

**सत्यव्रता**— जह भद्दमुहो भणादि । अच्छरासंबन्धेण इमस्स बाळस्स जणणी एत्थ देवगुरुणो तपोवणे पसूदा ।

यथा भद्रमुखो भणति । अप्सरःसंबन्धेनास्य बालस्य जननी अत्र देवगुरोस्तपोवने प्रसूता ।

**राजा**— (आत्मगतम्) हन्त! द्वितीयमिदमाशाजननम् । (प्रकाशम्) सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ।

**सत्यव्रता**— को तस्स धम्मदारपरिच्चाइणो णाम कित्तइस्सदि ?

कस्तस्य धर्मदारपरित्यागिनो नाम कीर्तयिष्यति ?

**राजा**— (आत्मगतम्) इयं खलु कथा मामेव लक्षीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छेयम् । अथ वा

---

वयसि । पश्चात् वार्द्धके । उशन्ति इच्छन्ति । आत्मगत्या मानुषगत्या । तत्कथमस्यात्र संगतिरिति भावः । यथा भद्रमुखो भणति, तत्तथेति शेषः । तस्य संगतिमाह— अप्सर इति । द्वितीयमिति द्वितीयत्वं पूरुवंश्यापेक्षया । इदमप्सरःसंबन्धकथनं शकुन्तलाया मेनकापत्यत्वात् । कस्तस्येति । पापिनस्तस्य नाम न कथयामीत्यर्थः । लक्षीकरोति विषयीकरोति । यदि तावदिति । यद्येषा पितुर्नाम न कथयति तर्हि मातुर्नाम पृच्छामि । अथ

न न्याय्यः परदारव्यवहारः ।

( प्रविश्य मयूरहस्ता )

**तापसी**— सव्वदमण, सउन्दळावण्णं पेक्ख ।

सर्वदमन, शकुन्तलावण्यं पश्य ।

**बालः**— ( सदृष्टिक्षेपम् ) कहिं मे अज्जु ?

कुत्र मे माता ?

**उभे**— एसो णामसारिस्सेण वंचिदो मादुवच्छळो ।

एष नामसादृश्येन वञ्चितो मातृवत्सलः ।

**सत्यव्रता**— इमस्स मित्तिआमोरस्स रम्मत्तणं पेक्खत्ति भणिदोसि ।

अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि ।

**राजा**— ( आत्मगतम् ) किं वा शकुन्तलेत्यस्य मातुराख्या ?

---

वेति । मातुर्नाम न पृच्छामीत्यर्थः । कुत इत्याह— न न्याय्य इति । शकुन्तलावण्यं शकुन्तस्य मृत्तिकामयूरस्य लावण्यम् । सउन्दलावण्ण इत्यस्य शकुन्तलावर्णमिति च्छायेति मत्वा पृच्छति— कहिं इति । तस्यान्यथा प्रतिपत्तिमपोहति— अस्येति । भणितोऽसि, न शकुन्तलावर्णं पश्येति । बालस्य तापस्याश्च व्यवहारादवमत- -मर्थमनुवदति— किं वेति । माता ह्यस्य शकुन्तला ; अतोऽयं

सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नायमत्र प्रस्तावो विषादाय कल्पेत ।

**बालः—** अज्जुए, रोअइ मे एसो भद्दमोरो ।

मातः, रोचते मह्यमेष भद्रमयूरः ।

[इति क्रीडनीयकमादत्ते ।

**सत्यव्रता—** (विलोक्य सावेगम्) अम्महे ! रक्खाकरण्डअं मणिबंधे से ण दीसइ !

अम्महे ! रक्षाकरण्डकं मणिबन्धेऽस्य न दृश्यते !

**राजा—** अलमलमावेगेन । नन्विदमस्य सिंहशाबमर्दनात् परिभ्रष्टम् ।

[इति आदातुमिच्छति ।

**उभे—** मा खु मा खु इदं आळम्बिअ । कहं गहिदं णेण !

मा खलु मा खल्विदमालम्ब्य । कथं गृहीतमनेन !

[इति विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः ।

---

मम पुत्र एवेति निश्चिन्वानो व्यपायमाशङ्कते— सन्ति पुनरिति । अन्यस्या अप्येवं नाम संभवतीत्यर्थः । कल्पेतेति संभावनायां लिङ् । अपि नामेति तद्द्योतकः । काक्वात्र विकल्पो व्यज्यते । अत्र अस्मिन् बाले । अयं प्रस्तावः पुत्रधीः । मे विषादाय तत्त्वज्ञानबाध्यत्वात् । मृगतृष्णिकेव सूर्यमरीचिषूदकधीरिव । आवेगः अतिसंभ्रमः । अम्महे इति खेदे । आदातुम् इच्छति उपक्र-

**राजा**— किमर्थं प्रतिषिद्धाः स्मः ?

**सुव्रता**— सुणादु महाराओ । एसा अवराइदा णाम ओसही इमस्स जादकम्मसमए भअवदा मारीएण दिण्णा। एदं मादापिदरा अत्ताणं अ वज्जिअ अवरो भूमिपडिदं ण गिह्णीअदुत्ति ।

शृणोतु महाराजः । एषा अपराजिता नाम ओषधी अस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां मातापितरावात्मानं च वर्जयित्वा अपरो भूमिपतितां न गृह्णात्विति ।

**राजा**— अथ गृह्णाति ?

**सुव्रता**— तदो सप्पो भविअ दंसदि ।

ततः सर्पो भूत्वा दशति ।

**राजा**— भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ?

**उभे**— अणेअसो ।

अनेकशः ।

---

मते । ओषधिविकाराभावेनायमस्य बालस्य पितेति निश्चित्याह-- महाराज इति । गृह्णात्विति इत्युक्त्वत्यर्थः । अथ गृह्णातीति, अत्र काका यद्यन्यः कश्चित् गृह्णाति तर्हि किं स्यादित्यर्थः । निर्णेतुं पृच्छति— भवतीभ्यामिति । विक्रिया सर्पभावः । अनेकशः

**राजा**— (सहर्षम्) किमिदानीं पूर्णमपि मनोरथं नाभिनन्दामि ।

[इति बालं परिष्वजते ।

**सत्यव्रता**— सुव्वदे, एहि इमं उत्तंतं णिअमव्वावुदाए सउंदळाए णिवेदम्ह ।

सुव्रते, एहि । इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः ।

[इति निष्क्रान्ते ।

**बालः**— मुञ्च मं । अज्जुआए सआसं गच्छम्मि ।

मुञ्च माम् । मातुः सकाशं गच्छामि ।

**राजा**— पुत्रक, मया सहैव मातरमभिनन्दिष्यसि ।

**बालः**— मम खु तादो दुस्सन्तो, ण तुं ।

मम खलु तातो दुष्यन्तः, न त्वम् ।

**राजा**— (सस्मितं स्वगतम्) एष विवाद एव प्रत्याययति ।

---

प्रत्यक्षीकृतेत्यर्थात् । ओषधिविकाराभावात् ममौरस एवायमिति निश्चित्याह— **किमिति** । मनोरथं पूर्णमपि अभिवाञ्छितं सिद्धमपि । 'काङ्क्षा लिप्सा मनोरथः' इत्यमरः । किं नाभिनन्दामि किं नानुभवामि । अनुभवति परिष्वङ्गेण । तत्कालोचितां प्रतिपत्तिमाह—सुव्रते इति । कथितम् अनुमत्या, कान्तादर्शनं किंचिदाश्वस्ता ।

(ततः प्रविशति एकवेणीधरा शकुन्तला ।)

**शकुन्तला**— विआरकाळे वि पकिदित्थं सव्वदमणस्स ओसहीं सुणिअ वि ण मे आसंसा आसी अत्तणो भाअहेएसु । अह वा जह साणुमदीए आचक्खिदं तह संभावीअदि एदं ।

विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधीं श्रुत्वापि न मे आशंसासीदात्मनो भागधेयेषु । अथ वा यथा सानुमत्याख्यातं तथा संभाव्यत एतत् ।

**राजा**— (शकुन्तलां दृष्ट्वा) अये अत्रभवती शकुन्तला ।

**वसने परिधूसरे वसाना**
**नियमक्षाममुखी धृतैकवेणी ।**
**अतिनिष्करुणस्य शुद्धशीला**
**मम दीर्घं विरहव्रतं वहन्ती ॥ २१ ॥**

---

आकर्ण्य बालकदशामसंभवाच्चिन्तयत्येवम्— विआरेति । विकारकाले विकारयोग्ये काले । प्रकृतिस्थाम् अविकाराम् । भागधेयेष्विति कार्ये कारणोपचारः; भर्तरीत्यर्थः । अथ वा आशंसा । कुत इत्याह— यथेति । एतत् प्रियतमागमनम् ॥

**वसने इति** । अधरोत्तरे । परिधूसरे, परिवृत्तिसंस्काराद्यभावात् । नियमेन भर्तृविरहोचितेन व्रतोपवासादिना क्षामं क्षीणं मुखं

**शकुन्तला**— (पश्चात्तापविवर्णं राजानं दृष्ट्वा) ण खु अज्जउत्तो विअ । तदो को एसो दाणिं किदरक्खामंगळं मे दारअं गत्तसंसग्गेण दूसेइ ?

न खल्वार्यपुत्र इव । ततः क एष इदानीं कृत-रक्षामङ्गलं मे दारकं गात्रसंसर्गेण दूषयति ।

**बालः**— (मातरमुपेत्य) अज्जुए, एसो को वि परकेरओ मं पुत्तत्ति आळवदि ?

मातः, एष कोऽपि परकेरको मां पुत्र इत्यालपति ।

**राजा**— प्रिये, क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तं यदहमिदानीं त्वयाप्रत्यभिज्ञातमात्मानं पश्यामि ।

---

यस्याः । शुद्धशीला साध्वी । दीर्घं चिरकालम् । वहन्ती अनेन दुष्करत्वं सावधानत्वं च व्यज्यते । तस्याः शोचनीयां तामवस्था-मवलोक्य तत्प्रयोजकमात्मानं प्रत्यमर्षित आह— अतिनिष्करुण-स्येति । संबन्धमात्रे षष्ठी । मम क्रौर्यमेकमेवात्र हेतुरिति भावः । पश्चात्तापविवर्णं राजानं दृष्ट्वा इति; तमज्ञात्वाहेति शेषः । परकेरकः परकीयः । मामियं न जानातीत्यवधार्याह— **प्रिये इति** । **क्रौर्यं** तत्कार्यं प्रत्याख्यानम् । अनुकूलपरिणामं अनुकूलः परिणामः पश्चात्तापलक्षणो यस्य । परिणामस्तूपादानस्य स्वाकारपरित्यागेना-कारान्तरापत्तिः; यथा मृदो घटत्वापत्तिः, तथा प्रत्याख्यानं पश्चात्तापतया परिणतम्; तस्यानुकूल्यं तुल्यदुःखकारित्वात् ।

**शकुन्तला**— (आत्मगतम्) हिअअ, अस्ससहि मच्छरिणा वि अणुकंपिदम्हि देव्वेण। अज्जउत्तो एव्व एसो।

हृदय, आश्वसिहि। मत्सरिणाप्यनुकम्पितास्मि दैवेन। आर्यपुत्र एवैषः।

**राजा**— प्रिये,

स्मृतिभिन्नमोहतमसो
दिष्ट्या प्रमुखे स्थितासि मे सुमुखि।
उपरागान्ते शशिनः
समुपगतो रोहिणीयोगः॥ २३॥

**शकुन्तला**— जेदु अज्जउत्तो।

जयत्वार्यपुत्रः। [इत्यर्धोक्ते बाष्पकण्ठी विरमति।

---

तदाह— अप्रत्यभिज्ञातमिति। तुल्यदुःखहेतुकेन वैवर्ण्यतानवादिना ह्यप्रत्यभिज्ञानमिति भावः। स्वरेण तं प्रत्यभिज्ञाय आह— हृदयेति॥

पूर्ववृत्तविस्मरणात् मया त्वयि क्रौर्यं प्रयुक्तमित्याह— स्मृतीति। स्मृत्या अनुभवसंस्कारोद्बोधेन भिन्नं मोहतमः तम इव मोहः विस्मृतिर्यस्य सः स्मृतिभिन्नमोहतमाः तस्य। सुमुखीत्यनेनाश्चर्यं तव प्रत्याख्यानव्यलीकराहित्यमिति द्योत्यते। उपरागो राहुग्रसनम्। तस्यान्ते निवृत्तौ। समुपगतः संगतः। दृष्टान्तोऽयम्।

**राजा**-- सुन्दरि,

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ २३ ॥

**बालः**-- अज्जुए, को एसो ?

मातः, क एषः ?

**शकुन्तला**-- वच्छ, दे भाअहेआइ पुच्छ ।

वत्स, ते भागधेयानि पृच्छ ।

**राजा**-- (शकुन्तलायाः पादयोः प्रणिपत्य)

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।

---

चाटूक्तिं करोति— **सुन्दरीत्यादिना** । सुन्दरि इदानीं विशेषदृश्यासि । स्त्रीणां किलिकिञ्चिताख्यो भावो विशेषदृश्यतामावहति । 'क्रोधाश्रुहर्षभीत्यादेः संकरः किलिकिञ्चितम्' इति । अविद्यमानः संस्कारः अलक्तकादिना यस्य, असंस्कारं पाटलं च ओष्ठपुटं यस्य तत् असंस्कारपाटलोष्ठपुटम् । अत्र विभावनालंकारः । 'क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना' इति ॥

**सुतन्विति** । सुतन्वित्यनेन व्यलीकस्य बहिर्विकाराभावो व्यज्यते । हृदयादित्यनेन हृदये निगूढमस्तीति च । व्यलीकमप्रियम् । किमपि केनापि हेतुनेत्यर्थः । संमोहः अज्ञानम् । तदा त्वय्युपया-

प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ २४ ॥

**शकुन्तला**— उट्ठेदु अज्जउत्तो । णूणं मम सुअरिदप्पडिबंधअं पुराकिदं तेसु दिअसेसु परिणामाहिमुहं आसी । जेण साणुक्कोसो वि अज्जउत्तो मइ तहविहो संवुत्तो ।

उत्तिष्ठत्वार्यपुत्रः । नूनं मम सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामाभिमुखमासीत् । येन सानुक्रोशोऽप्यार्यपुत्रो मयि तथाविधः संवृत्तः ।

[राजा उत्तिष्ठति ।

**शकुन्तला**— अह कहं अज्जउत्तेण सुमरिदो दुक्खभाई अयं जणो ?

---

तायाम् । अज्ञानान्मयैवं कृतम्, तस्मात् क्षन्तव्यमिति भावः । मम तामसत्वमत्र हेतुरित्यात्मानमधिक्षिपति— प्रबलेति । प्रबलं प्रभूतं तमः तमोगुणो येषां ते प्रबलतमसः, तेषाम् । एवंप्रायाः अज्ञानादयः । यदुक्तम्— 'सत्त्वं ज्ञानं तमोऽज्ञानं रजो मिश्र उदाहृतः' इति । शुभेषु श्रेयःसूपनतेषु । वृत्तयः, सन्ति हीति संबन्धः । अन्धः उपहतदृष्टिः । अहिशङ्कया सर्प इति भ्रान्त्या । नूनम्, तर्कयामीत्यर्थः । 'नूनं तर्केऽर्थनिश्चये' इत्यमरः । सुचरितस्य तत्कार्यस्य सुखस्य प्रतिबन्धकं पुराकृतम् । अर्थाद्दुष्कृतम् । अनुक्रोशः अनुकम्पा ।

अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः ?

**राजा—** उद्धृतविषादशल्यः कथयिष्यामि ।

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो बद्धबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
वाष्पं प्रमृज्य विगतानुशयो भवामि ॥ २५ ॥

[इति यथोक्तमनुतिष्ठति ।

**शकुन्तला—** (नाममुद्रां दृष्ट्वा) अज्जउत्त, इदं तं अंगुळीअअं ।

आर्यपुत्र, इदं तदङ्गुलीयकम् ।

**राजा—** अथ किम् । अस्मादङ्गुलीयोपलम्भात्खलु मया स्मृतिरुपलब्धा ।

**शकुन्तला—** विसमं किदं णेण । जं अज्जउत्तस्स पच्चअकाळे दुळ्ळहं आसि ।

विषमं कृतमनेन । यदार्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत् ।

---

उद्धृतः विषाद एव शल्यो यस्मात् सः उद्धृतविषादशल्यः । शल्योद्धरणप्रकारमाह—— **मोहादिति** । मोहादज्ञानात् । अत्र पुरातनाद्यतनयोर्बाष्पयोरेकत्वमभेदाध्यवसायात् । विषमं संकटम्,

  

**राजा**— तेन हि ऋतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम् ।

**शकुन्तला**—ण से विस्ससामि अज्जउत्तो एव्व णं धारेदु ।

नास्य विश्वसिमि । आर्यपुत्र एवैनद्धारयतु ।

(ततः प्रविशति मातलिः ।)

**मातलिः**— दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान् वर्धते ।

**राजा**— अभूत्संपादितस्वादुफलो मे मनोरथः । मातले, न खलु विदितोऽयमाखण्डलस्यार्थः । अथ वा किमीश्वराणां परोक्षम् ।

**मातलिः**— (सस्मितम्) अथ किम् । एह्यायुष्मन्, भगवान्मारीचस्ते दर्शनं वितरति ।

**राजा**— शकुन्तले, अवलम्बस्व पुत्रम् । त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

---

कृतमनेन । कुत इत्याह— यदेति । तेन हीति । तेन हि लता ऋतुसमवायचिह्नं कुसुमं प्रतिपद्यतामित्यन्वयः । अत्राप्रस्तुतात् सदृशात् सदृशान्तरं प्रस्तुतं प्रतीयते । अतः मत्समागमचिह्नं अङ्गुलीयकं धारयतु भवतीत्यर्थः । न खल्विति । काक्वा प्रश्नः । मनोरथावाप्तिराखण्डलेन वेद्यते किमु इत्यर्थः । अथ वा विदितमेवेत्यर्थः । कुत इत्याह— किमिति । दर्शनं दर्शनावसरम् ॥

**शाकुन्तला**— हिरिआमि अज्जउत्तेण सह गुरुसमीवं गंतुं ।

जिह्रेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम् ।

**राजा**— आचरितव्यमभ्युदयकालेषु ।

[इति सर्वे परिक्रामन्ति ।

(ततः प्रविशति अदित्या सार्धमासनस्थो मारीचः ।)

**मारीचः**— (राजानमवलोक्य) दाक्षायणि,

**पुत्रस्य ते रणशिरस्ययमग्रयायी**
**दुष्यन्त इत्यभिहितो भुवनस्य भर्ता ।**
**चापेन यस्य विनिवर्तितकर्मजातं**
**तत्कोटिमत्कुलिशमाभरणं मघोनः ॥ २६ ॥**

**आदितिः**-- संभावणीआणुभावा से आकिदी ।

---

पुत्रस्येति । विनिवर्तितं शमितं कर्मजातं असुरसंहारलक्षणं यस्य तत् विनिवर्तितकर्मजातम् । अत एव कोटिमत् प्रशस्ताश्रियुक्तम् । आभरणं हस्तालंकारः । भवतीति शेषः । अत्र चापकर्तृककुलिशकर्मजातविनिवर्तनात् कार्यादसुरवधलक्षण कारणं प्रतीयते । अयं तव पुत्रस्य परिपन्थिनोऽसुरान्निहन्तीत्यर्थः । पर्यायोक्तमत्रालंकारः । संभावनीयः ऊह्यः अनुभावः यया कारणभूतया सा संभावनीयानुभावा ॥

संभावनीयानुभावास्याकृतिः ।

**मातलिः**— आयुष्मन्, एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः । तदुपसर्प ।

**राजा**— मातले, एतौ

**प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं**
**भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।**
**यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं**
**द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम् ॥२७॥**

**मातलिः**— अथ किम् ।

**राजा**— (उपेत्य) उभाभ्यामपि वासवनियोज्यो दुष्यन्तः प्रणमति ।

---

**एताविति ।** अत्र काक्वा प्रश्नः । हे मातले एतौ तदिदं द्वन्द्वं किमु इत्यन्वयः । यत् द्वन्द्वं द्वादशधा स्थितस्य तेजसः आदित्यानां कारणं प्राहुः । यज्ञभागेश्वरं यज्ञो भागो येषां तेषां देवानामीश्वरं महेन्द्रं सुषुवे । यस्मिन् । आत्मभुवः ब्रह्मणः । परः उत्कृष्टः । पुरुषः पुरुषोत्तमः । भवाय जन्मने । आस्पदं प्रतिष्ठाम् । चक्रे, इन्द्रावरजत्वेन । दक्षमरीचिसंभवं दक्षान्मरीचेश्च संभवो यस्य । दाक्षायणीमारीचनामकम् । स्रष्टुः, एकान्तरम् एकः दक्षः मरीचिश्च अन्तरे मध्ये यस्य ॥

**मारीचः**— वत्स, चिरं पृथिवीं पालय ।

**अदितिः**— अप्पडिरहो होहि ।

अप्रतिरथो भव ।

**शकुन्तला**— दारअसहिदा सउंदळा वो पादवंदणं करेइ ।

दारकसहिता शकुन्तला वां पादवन्दनं करोति ।

**मारीचः**— वत्से,

**आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।**
**आशीरन्या न ते योग्या पौलोमीसदृशी भव ॥**

**अदितिः**— जादे भत्तुणो बहुमदा होहि । अवस्सं दे दीहाऊ वच्छो उभअकुळणंदणो होदु । उपविसह ।

जाते, भर्तुर्बहुमता भव । अवश्यं ते दीर्घायुर्वत्स उभयकुलनन्दनो भवतु । उपविशत ।

[इति सर्वे प्रजापतिमभित उपविशन्ति ।

**मारीचः**— (एकैकं निर्दिशन्)

**दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।**
**श्रद्धा वित्तं विधिश्चेति त्रितयं वः समागतम् ॥ २९ ॥**

---

दिष्ट्येति । साध्वी शकुन्तला इदं सदपत्यं भवान् इति त्रयं समागतमिति यत् एतत् श्रद्धा वित्तं विधिश्चेति त्रयं

**राजा**— भगवन्, प्रागभिप्रेतसिद्धिः पश्चाद्दर्शनम्। अपूर्वः खलु वोऽनुग्रहः। पश्यतु भवान्।

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक्तदनन्तरं पयः।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु संपदः॥ ३०॥

**मातलिः**— एवं विधातारः प्रसीदन्ति।

**राजा**— भगवन्, इमामाज्ञाकरीं वो गान्धर्वेण विधिनोपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य। पश्चादेनामङ्गुलीयदर्शनादूढपूर्वामवगतोऽहम्। तच्चित्रमिव मे प्रतिभाति।

---

समागतमेवेत्यर्थः। अभिप्रेतसिद्धिः पुत्रदारसमागमः। अपूर्वः पूर्वं क्वचिदपि न दृष्टः। अपूर्वत्वमुपपादयति— उदेतीति। अयं क्रमः—पूर्वं निमित्तं पश्चात् नैमित्तिकमित्येवंरूपः। तुशब्दो विशेषद्योतकः। निमित्तभूतः प्रसादः पश्चात्, नैमित्तिक्यः संपदः पूर्वमिति भावः। विधातारः प्रजापतयः। आज्ञाकरीम्, भवत इति शेषः॥

यथा गजो नेति समक्षरूपे
तस्मिन्नतिक्रामति संशयः स्यात् ।
पदानि दृष्ट्वा तु भवेत्प्रतीति-
स्तथाविधो मे मनसो विकारः ॥ ३१ ॥

**मारीचः**— वत्स, अलमात्मापचारशङ्कया । संमोहोऽपि त्वय्युपपन्नः । श्रूयताम् ।

**राजा**— अवहितोऽस्मि ।

**मारीचः**— यदैवाप्सरस्तीर्थावतरणात् प्रत्यादेशविक्लवां शकुन्तलामादाय मेनका दाक्षायणीमुपगता तदैव ध्यानादवगतोऽस्मि— दुर्वाससः शापादियं तपस्विनी सहधर्म-

---

यथेति । समक्षरूपे प्रत्यक्षरूपे । आतिक्रामति तिरोभवति । संशयः गजो वा न वेति । पदानि पदविन्यासप्रतिबिम्बानि । प्रतीतिः गज एव मया दृष्टः इति । मनोविकारः अस्यामुपनतायां नेयं मम भार्येति, पुनस्तिरोहितायां मम भार्या वा न वेति, पुनरङ्गुलीयकं दृष्ट्वा मम भार्यैवेयमित्येवंविधा प्रतीतिः । कण्वविषयापराधशङ्कां निरस्यति— अलमिति । सदा प्रबुद्धस्य मे कथं तदा संमोहोऽभूदिति शङ्कामपनयति— संमोहोऽपीति । उपपत्तिमाह— यदैवेति । अवतरणात् अवतरत्यनेनेत्यवतरणं सोपानमार्गः ॥

चारिणा त्वया प्रत्यादिष्टा नान्यथेति । स चायमङ्गुलीयकदर्शनावसानः ।

**राजा**— ( सोच्छ्वासम् ) एष वचनीयान्मुक्तोऽस्मि ।

**शकुन्तला**— (स्वगतम्) दिट्ठिआ कारणप्पच्चादेसी अज्जउत्तो । ण खु सत्तं अत्ताणं सुमरामि । अह वा पत्तो मए सावो विरहसुण्णहिअआए । अदो एव्व सहीहिं अच्चादरेण संदिट्ठम्हि भत्तुणो अंगुलीअअं दंसइदव्वंत्ति ।

दिष्ट्या कारणप्रत्यादेशी आर्यपुत्रः । न खलु शप्तमात्मानं स्मरामि । अथ वा प्राप्तो मया शापो विरहशून्यहृदयया । अत एव सखीभ्यामत्यादरेण संदिष्टास्मि भर्त्रे अङ्गुलीयकं दर्शयितव्यमिति ।

**मारीचः**— वत्से, विदितार्थासि । सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः । पश्य,

**शापादसि प्रतिहता स्मृतिरोधरूक्षे**
**भर्तर्यपेततमसि प्रभुता तथैव ।**

---

विदितार्था विदितपरमार्था ॥

शापादिति । असीति त्वमर्थमव्ययम् । प्रतिहता अलब्धप्रवेशा । शापात्, स्मृतिरोधरूक्षे स्मृतेः स्मरणस्य रोधेन शापहेतुकेन रूक्षे

छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ ३२ ॥

**राजा**— यथाह भगवान् ।

**मारीचः**— वत्स, कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मा पुत्र एष शाकुन्तलेयः ?

**राजा**— भगवन्, अत्र खलु मे वंशप्रतिष्ठा ।

**मारीचः**— तथाभाविनमेनं चक्रवर्तिनं पुत्रमवगच्छतु भवान् । पश्य,

रथेनानुत्खातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।
इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥

---

क्रूरे । प्रतिरोधरूक्ष इति वा पाठः । भर्तरि भर्तृमनसि । अपेततमसि अङ्गुलीयकदर्शनेन शापनिवृत्तौ अज्ञाने नष्टे । प्रसृता लब्धप्रवेशा । छाया प्रतिबिम्बम् । मूर्च्छति प्रतिफलति । दृष्टान्तोऽलंकारः । तथाभाविनं वंशप्रतिष्ठाकरम् । **रथेनेति** । अनुत्खातस्तिमितगतिना आकाशचारिणेत्यर्थः । पुरा जयति । 'यावत्पुरा—' इत्यादिना । भविष्यति लट् । इह आश्रमे । सर्वदमनः सर्वदमननामा ॥

**राजा** —भगवता कृतसंस्कारे सर्वमस्मिन् वयमाशंसामहे ।

**अदितिः**— भअवं, इमाए दुहिदुमणोरहसंपत्तीए कण्णो वि दाव तव पस्सचरेहिं तावसेहिं सुदवित्थरो करीअदु । दुहिदुवच्छळा मेणआ इह एव्व मं उवअरंती चिठ्ठइ ।

भगवन्, अस्या दुहितृमनोरथसंपत्त्याः कण्वोऽपि तावत्तव पार्श्वचरैस्तापसैः श्रुतविस्तरः क्रियताम् । दुहितृवत्सला मेनका इहैव मामुपचरन्ती तिष्ठति ।

**शकुन्तला**— मणोरहो खु मे भणिदो भअवदीए ।

मनोरथः खलु मे भणितो भगवत्या ।

**मारीचः**— तपःप्रभावात् प्रत्यक्षं सर्वमत्रभवतः ।

**राजा**— अतः खलु मामनभिक्रुद्धो गुरुः ।

**मारीचः**— तथाप्यसौ प्रियमस्माभिः प्रष्टव्यः । कः कोऽत्र भोः ।

(प्रविश्य)

**शिष्यः**— भगवन्, अयमस्मि ।

**मारीचः**— गालव, इदानीमेव विहायसा गत्वा तत्रभवते कण्वाय मद्वचनात् प्रियमावेदय । यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीतेति ।

**शिष्यः**— यदाज्ञापयति भगवान् । [इति निष्क्रान्तः ।

**मारीचः**— वत्स, त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमास्थाय ते राजधानीं प्रतिष्ठस्व ।

**राजा**— यदाज्ञापयति भगवान् !

**मारीचः**—

**तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु**
**त्वमपि विततयज्ञः स्वर्गिणो भावयालम् ।**
**युगशतपरिवर्तानेवमन्योन्यकृत्यै-**
**र्नयतमुभयलोकानुग्रहश्लाघनीयैः ॥ ३४ ॥**

**राजा**— भगवन्, यथाशक्ति श्रेयसि प्रयतिष्ये ।

**मारीचः**— किं ते भूयः प्रियमुपहरामि ?

**राजा**— अतः परमपि यदि भगवान् प्रसन्नः कर्तुमिच्छति । एतावदस्तु ।

(भरतवाक्यम् ।)

**प्रवर्ततां प्रकृतिहिताय पार्थिवः**
**सरस्वती श्रुतिमहिता महीयसाम् ।**

---

तवेति । भावय संभावय । परिवर्तः आवृत्तिः ॥

भरतवाक्यम् । [illegible] प्रस्तावात्तत्कार्याभेदेन मङ्गलाशं-

ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥ ३५ ॥

[इति निष्क्रान्ताः सर्वे ।

## इति सप्तमोऽङ्कः ॥

---

सनतत्परं वाक्यम् । **प्रवर्तताम्** इति । प्रकृतिहिताय, उपलक्षणमेतत् प्रजानामपि । पार्थिवः प्रजानां विनयाधानरक्षणभरणादिकं हितं कर्तुं प्रवर्तताम् । प्रवर्ततामिति द्वितीयपादेऽनुषज्यते । महीयसां महाकवीनाम् । आह्लादकत्वात्, श्रुतिमहिता श्रोत्रेन्द्रियपूजिता । सरस्वती काव्यात्मिका प्रवर्तताम् । यदुक्तमनर्घराघवे—'वामाङ्गं पृथुलस्तनस्तबकितं यावद्भवानीपतेर्लक्ष्मीकण्ठहठग्रहप्रणयिता यावच्च दोष्णां हरेः । यावच्च प्रतिसामसारणविधिव्यग्रौ करौ ब्रह्मणः स्थेयासुः श्रुतिशुक्तिलेह्यमधवस्तावत्सतां सूक्तयः' इति । ममापि चेति । अपि च आशास्यान्तरमस्तीत्यर्थः । तदाह— आत्मभूः श्रीपरमेश्वरः, मम, पुनर्भवं संसारदुःखं क्षपयतु । परिगतशक्तिः परिगता मिलिता देहार्धतादात्म्यं गता शक्तिः शिवा यस्येत्यर्थः । अत आह— नीललोहित इति । यथा— 'वामे मरकतश्यामा दक्षिणे विद्रुमारुणा । देवता दंपतिमयी सा मे कामदुघा भवेत्'

इति । अत्र महाकविना 'आरम्भे मङ्गलं कुर्यात्समाप्तावपि मङ्गलम्' इति दर्शनानुसारेण आरम्भे 'या सृष्टिः' इत्यादिना समाप्तावनेन च मङ्गलाचरणं कृतमिति शिवम् ॥

इत्यभिरामविरचिते अभिज्ञानशाकुन्तलदिङ्मात्रदर्शने
सप्तमोऽङ्कः ॥



॥ श्रीः ॥

# ॥ श्लोकानुक्रमणिका ॥

